# बुद्धचरितम् ।

(पञ्चमसर्गान्तम्)

कविना श्रीमताऽश्वघोषेण प्रणीतम् ।

राशिवडेकरेण श्रीअप्पाशर्मविद्यावाचस्पतिविद्या-
लङ्कारमहोपदेशकेन विनिर्मितया बालबोधि-
न्याख्यया व्याख्यया समुल्लसितम् ।




मयराष्ट्रविद्यापीठे संस्कृताचार्यपदमधितिष्ठता एम् . ए.
एम्. आर. ए. एस्. बिरुदधारिणा सोवनी-
कुलोत्पन्नेन वामनसूनुना श्रीवेङ्कटेश-
शर्मणा संग्रथितेनैंग्रेज्यनुवादेन
टिप्पन्या च समुद्भासितम् ।

पुण्यपत्तने यशवन्तयन्त्रालये संमुद्य अ. चिं. भटसंघेन
प्रकाशितम् ।

१८३३ तमे शाके.

# BUDDHACHARITAM.

By

SHRI ASHVAGHOSHA.

*CANTOS I—V.*

With a Sanskrit Commentary

By

SHRI APPASHASTRI RASHIVADEKAR

*Vidyavachaspati, Vidyalankara.*

and

English translation and notes

by

V. V. SOVANI M. A., M. R. A. S.

*Professor of Sanskrit, Meerut College.*

MEERUT, U. P.




*Publishers*

**A. C. BHAT & CO.**

POONA CITY.

1911.

श्रीशिवः शरणम् ।

# विज्ञापनम् ।

विदितमेवैतद्भूयसामक्षरमुखानां यन्मोहमयीविभाग आगामिनि वत्सरे बुद्धचरितं नाम काव्यं पी. ई. श्रेण्यामध्येयतया विद्याधिकरणिकैर्विनियुक्तमिति । किरलतमः किल प्रचारो बुद्धचरितस्य । तत्रैतदाश्चर्यं यदत्र नास्ति काचिदपि संस्कृतव्याख्येति । केवलं तु विद्यावतां प्रवरेण महोत्साहिना पाश्चात्यपण्डितेन श्रीमता कॉवेलमहोदयेन विनिर्मित इंग्रेजीभाषामयोऽस्यानुवादः प्रथितः । मूलमपि च मुद्रितं तेनैव । संस्कृतप्रबन्धानां पुनर्यद्यपि सांप्रतिकानां छात्राणां कृत आवश्यकमिंग्रेजीभाषामयं टिप्पन्यनुवादादिकं तथापि न किल नोपयुक्तं संस्कृतव्याख्यानम् । संस्कृतभाषाया हि रहस्यावबोधे सरला संस्कृतव्याख्यैव प्रधानोऽभ्युपाय इति । भाषान्तरेण हि नैव शक्यते यथावत्कस्याश्चिदपि भाषाया रहस्यमवबोधयितुमिति नैतदविदितं मर्मविदाम् । तत एव च प्रावर्तिष्महि व्याख्यातुं काव्यमिदं कवेरश्वघोषस्य । यावच्छक्यं चात्र प्रयतितमस्माभिर्नानाविधानि प्रमाणान्यालम्ब्य । तथापि तु प्रमादानां मनुष्यमात्रनिष्ठतया यदि क्वचित्स्खलनमालक्ष्येत तदा संशोधयेयुरेतद्विद्वांसो मर्षयेयुश्चेति प्रार्थ्यतेऽस्माभिः ।

व्याख्याविनिर्माणे तावत्सुविशुद्धस्य पुस्तकस्यावश्यकत्वमवधारयद्भिः समवलोकितमस्माभिः श्रीमता कॉवेलमहोदयेन प्रकाशितं पुस्तकं बुद्धचरितस्यातीते वर्षे । भूयःसु पुनः स्थलेष्वशुद्धतामेतस्योत्प्रेक्षमाणाः पुस्तकस्यास्य मातृकाया (mss) एव समवेक्षणे नितान्तमेवोत्सुकाः समभूम । सन्ति किल विलायतप्रदेशे त्रीणि पुस्तकान्येतस्येति च समाकर्णयन्तः कस्यापि कल्याणिनः सुहृदोऽत्रत्यस्य साहाय्येन तत्प्रतिरूपकादाने प्रायतिष्महि । अस्ति हि संप्रति शार्मण्यदेशे सुहृदेतस्य । यः किल वैलायतिके विद्यापीठे संस्कृतमध्यैष्ट । प्रयत्नः पुनरसावस्माकं नैव फलेग्रहित्वमापन्नः । तत एव च विहाय मार्गमिममन्यत्रैव पदं न्यदधाम । उपायनीकृतः किलास्मभ्यं कोल्हापुरीयेण विद्वत्तमेन प्रथितयशसा एम्. ए. एल् एल्. बी. प्रभृतिबिरुदमण्डितेन श्रीमता र. ना. आपटेमहोदयेनात्मना प्रणीत इंग्रेजीभाषामयः श्रीकालिदासकालनिर्णयविषयकः प्रबन्धः कोऽपि १८१५ तमे शाके । तं चैनमनुवाचयद्भिरवगतमस्माभिरस्ति बुद्धचरितं नाम काव्यं किमपि यदेवोपजीव्य प्रणीतानि समालक्ष्यन्ते कियन्तिचित्पद्यानि कालिदासीयेषु काव्येष्वित्युत्प्रेक्ष्यते कैश्चिद्वार्चीनैर्विद्वद्भिरिति । अथ यदा संस्कृतचन्द्रिकायां नामास्मदीयायां संस्कृतमासिकपत्रिकायां प्रावर्तष्महि कविकुलचूडामणिं श्रीमन्तं कालिदासमधिकृत्य प्रबन्धं प्रकाश-

यितुं ( १८२१ शाके ) तदा कालिदासीयानां चाश्वघोषीयाणां च पद्यानां सादृश्यमवलोकितुमुदकण्ठतान्तरङ्गमस्माकम् । बुद्धचरितोपलम्भमन्तरा च दुष्पूरोऽयं मनोरथ इति विभावयतां नयनरसणिमापतितमस्माकं पिचण्डिलोदरमिव बृहत्तरं रघुवंशपुस्तकं किमपि, यत्र किल निर्दिष्टं कियताप्यंशेन सादृश्यं कालिदासीयानां चाश्वघोषीयाणां च पद्यानाम् । असाक्षात्कृततया तु बुद्धचरितस्य नात्र समुदमिषन्नः श्रद्धा । तत एव च प्रार्थितोऽस्माभिः सैंहलेषु प्रियसुहृत्सु कश्चित्स्थविरः कर्मण्येतस्मिन् । तेन च प्रहितानि नः कतिपयानि पद्यानि यानि कियताऽप्यंशेन प्रकाशयन्ति सादृश्यं कालिदासीयपद्यानाम् । प्रकाशितानि चैतानि संस्कृतचन्द्रिकायामस्माभिः । अवसरेऽस्मिन्निवेदितं सैंहलेन नः प्रियसुहृदा 'विद्यतेऽत्र सैंहलाक्षरैस्तालपत्रेषु लिखितं जीर्णप्रायं बुद्धचरितस्य पुस्तकं कस्यापि यतेः सविधे । दुर्लभतमं खल्वेतत् । तथापि तु प्रार्थितेनैतेन पद्यान्येव कियन्तिचिन्मह्यं प्रदर्शितानि यानि कालिदासीयपद्यसादृश्यमासेवन्ते ।' इति । नैव पुनस्तदा संभावितस्माभिर्व्याख्यायेत स्वयं बुद्धचरितं कदाचिदपीति । अतीते पुनर्वत्सरे विनिश्चितेस्य व्याख्याने विफलतां चोपारूढे प्रयत्नान्तरे समारूढं नः स्मृतिसरणिं सैंहलस्य प्रियसुहृद उपरितनं वचनं, अभ्यर्थितश्चायं महता प्रयासेन सफल्यकार्षीन्मनोरथमस्माकं सर्गपञ्चकात्मकस्य बुद्धचरितांशस्य प्रतिरूपप्रेरणेनेति कृतज्ञाः स्म एतस्मिन् । एष खल्वस्य निर्बन्धो यन्नैव प्रकाशनीयमात्मनो नामेति । यः किल खिलीकरोति बलवदुत्कण्ठितामप्यस्य नाम्नः प्रकाशने लेखनीमस्माकम् । एतेन च प्रहिते प्रतिरूपे संदृश्यते विरलविरलः पाठान्तराणामप्युल्लेखः । एतदेव च विशेषतः प्रमाणीकृतमस्माभिः । समवलोकितं च सूक्ष्मया दृशा पुस्तकं कॉवेलमहोदयस्यापि । स्वीये चात्र पुस्तके सुविशुद्धा एव विनिवेशिताः पाठाः । अन्ये पुनरधस्ताद्विनिर्दिष्टाः । ये पुनः केचन समानार्थका ये वा वर्णभ्रमवशात्संवृत्ततया संभाविताः प्रायेण नैव ते समुल्लिखिताः ।

व्याचक्षाणैश्च बुद्धचरितं सैंहलेन नः प्रियसुहृत्प्रवरेण श्रीमता शीलस्कन्धस्थविरमहोदयेन प्रणीतः सद्धर्ममकरन्दस्तेनैव च प्रहितं चोपायनीकृतं च कव्यन्तरप्रणीतं कतिपयपृष्ठात्मकं मुद्रितं बुद्धचरितात्मकं काव्यं प्राचीनो ललितविस्तरो महाराष्ट्रभाषामयाश्च प्रबन्धा इत्येतानि पुस्तकानि चरितांशे प्रमाणीकृतान्यस्माभिः । तथापि तु नैवात्र न संभाव्यतेऽनवधानजन्यं स्खलितं क्वापि । क्षम्यतां यदि पुनरेतत्कुत्रचित्समालक्ष्येत । कोशव्याकरणादिप्रबन्धानां पुनरस्माभिरत्र प्रमाणीकृतानां परःशतानां नामानि व्याख्यावलोकनत एव शक्येरन्नवगन्तुमिति नात्र व्यापार्यते लेखन्यस्माभिः ।

अत्र च इंग्रेजीभाषामय्याष्टिप्पन्याश्चानुवादस्य च प्रणयने प्रार्थितः प्रियसुहृत्प्रकाण्डोऽस्माकं मयराष्ट्र ( Meerut ) विद्यापीठे संस्कृताचार्यपदमधितिष्ठन् एम्. ए. प्रभृतिबिरुदावलीविभ्राजितः कल्याणप्रकृतिर्विद्वत्तमः सोवनीत्युपाह्वः श्रीमान् वेङ्कटरायमहाभागः सोत्साहमविगणय्यापि कार्यान्तरक्षतिं सफलीकृतवान्मनोरथमस्माकमिति न किल विस्मरिष्याम उपकारमेतस्य कदाचिदपि ।

अवसरेऽस्मिन्नानाविधं साहाय्यमारचयतां कथं वा विस्मर्यन्तां कल्याणभाजनानां सरलप्रकृतीनां विद्वत्प्रणयिनां च श्रीमदच्युतरायभटमहोदयानामुपकारा अस्माभिः ? एतेषामेव ह्यसौ प्रभावः सौजन्यस्य यदेतदद्य प्रकाशमारूढं बुद्धचरितपुस्तकमस्माकम् ।

अस्ति खल्वस्माकं प्रत्याशा यत् समुपयुज्य पुस्तकान्यस्मदीयानि जानीयुर्बुद्धचरितस्य हृदयं विज्ञासवः सफलीकुर्युश्च प्रयासमेनमस्माकमितीति शिवम् ।

व्याख्याता
श्रीअप्पाशर्मा विद्यावाचस्पतिः
विद्यालङ्कारो महोपदेशकश्च ।



# भूमिका।

इह खलु जगति यानि नाम विद्यन्ते पारमार्थिकस्यानन्दस्याधिगमसाधनानि तेषु काव्यमेव प्रधानतमम् । तद्धि समनुवाच्यमानमप्युपनमयति तिरोहितविषयान्तरमप्रतिममानन्दं कमपि । यः किल चिरमपि समास्वाद्यमानो न केवलमहीनरसः प्रत्युत प्रतिक्षणं नवो नव इव समुल्लसति । एतस्यैव च प्रणयनाद्दिवं गता अपि स्फुरन्तीव पुरतः सहृदयानामद्यापि कालिदासादयः कवयः । विरलानि पुनः काव्यान्येवंविधानि । कवयश्चैवंविधाः सुविरला एव । काव्येषु च यद्यपि नार्हत्युत्तमश्रेणीयत्वमारोढुं तथापि तु नैव जघन्यश्रेणीयं बुद्धचरितं नाम । एतदपि हि क्वचित्क्वचिच्चमत्करोत्येवेति ।

अस्य च प्रणेता श्रीमानश्वघोषो नाम कविः । एष च राज्ञः कनिष्कस्य समसामयिक इतीतिहासविदः। कनिष्कश्च काश्मीराधिपतिः ख्रिस्तीयवत्सरारम्भतः प्राचीनायां प्रथमशतब्द्यां प्रादुर्भूतः । तस्य च तस्या १२० - १२५ वत्सरात्मक आभ्युदयिकः काल इति भारतीयप्राचीनेतिहासे ( अर्लि हिस्ट्री ऑफ् इंडिआ ) २४२ तमे पृष्ठे श्रीमान् व्ही. ए. स्मितमहोदयः सप्रमाणमुपपादयति । आचष्टे च पाटलिपुत्रमभिषेणितवता श्रीमता कनिष्केण श्रीमानश्वघोषस्ततः काश्मीरान्नीत इति । [ २४३ तमे पृष्ठे ] । न खल्वत्र किंचिदाभ्यन्तरं नाम प्रमाणं बुद्धचरिते संदृष्टं येनानयोः समसामयिकत्वं वा बुद्धचरितस्यैव वा समयो विनिर्णेतुं शक्येत ।

ख्रिस्तीयानां सप्तम्यां शताब्द्यां भारतं वर्षमुपागवता श्रीमता व्ह्यनसंघा (हुएन्संग्) भिधानेन चीनपथिकेन समुल्लिखितं नाम श्रीमतोऽश्वघोषस्य । एष हि अश्वघोषो देवो नागार्जुनः कुमारलब्धश्चेति चत्वारः किलामी भुवनानि भासयन्तो भास्वन्त एवेत्याचष्टे स्म । तस्या एव च शताब्द्या अन्तिमे पादे भारतं वर्षमनुप्राप्तवानीतिसिंहो ( इट्सिंग् ) नाम चीनपथिकोपि प्राचीनतमश्च श्रीमानश्वघोषो बुद्धचरितस्य चालङ्कारशास्त्रस्य च प्रणेतेत्याह । नैव पुनर्विज्ञायतेऽस्माभिः को वायमश्वघोषेण प्रणीतोऽलङ्कारग्रन्थ इति ।

श्रीमान्कॉवेलमहोदयश्च बुद्धचरितमिव बुद्धस्तवाख्योपि कश्चन प्रबन्धः श्रीमताश्वघोषेण संग्रथितो यत्र किल अमिताभश्चावलोकितेश्वरश्च महास्थामा चेत्येतेषां नामान्युल्लिखितानीति बुद्धचरितानुवादभूमिकायामभिधत्ते । पुस्तकं पुनरेतदश्वघोषेणैव प्रणीतं नो वा यश्चास्य प्रणेता स एव न वा बुद्धचरितस्येति च विना बुद्धस्तवावलोकनं न शक्यं विनिर्णेतुम् । न चाद्याप्युपारूढोस्मदीयां नयनसरणिं बुद्धस्तवः । व्याकरणेपि कश्चनानेन संदृब्धः सन्दर्भ इत्यपि कश्चिदाचष्टे । व्याकरणशास्त्रे पुनर्न क्वापि निर्दिष्टो नाम्नाश्वघोषः केनापि । हैहरण्यची रतमप्येतद्विनिर्मितामिति कश्चित्

अनेके किलाश्वघोषाः प्रादुर्भूता इत्युदीर्यते कैश्चित् । न चैतदसंभवि । सुलभानि हि समानान्यभिधानानीति । तत एव च को वा बुद्धचरितस्य कवयिताश्वघोष इति दुष्करमेवावधारयितुम् । न खल्वश्वघोषेण कनिष्कस्य नापि वा कनिष्केणाश्वघोषस्य सम्बन्धः क्वापि समुल्लिखितो येन बलीयसा प्रमाणेन प्रमाणान्तराणि प्रत्याख्यायेरन् । तत व च संप्रति विनिर्णीयमानं कनिष्कसमानकालिकत्वमश्वघोषस्य तर्कमात्रशरणत्वाच्चलाचलमेव । ' यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः । अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ।' इति ह्याहुः ।

आदितः किल ब्राह्मण एवासीदश्वघोषः परस्तात्पुनः पार्श्वस्य नाम श्रमणस्य च्छात्रेण पूर्णयशसा बौद्धत्वमनुप्रापित इत्येके । बलवत्पुनरत्र प्रमाणं नोपलब्धमस्माभिः। एष च काश्मीरेषु बुद्धसङ्घस्याग्रासनाधिपत्यमनुप्राप्तः । एतस्यैव च साहाय्येन व्याख्यातो महाविभाषाख्यो बौद्धानुशासनग्रन्थो गान्धारानधिवसता कात्यायनीपुत्रेणेति पुरावृत्तविदः केपि ।

यथोक्तपूर्वे प्रबन्धा एवं वज्रसूच्युपनिषदपि श्रीमताश्वघोषेणैव प्रणीतेति प्रवदन्ति केचित्स्थूलदृशः । अत्र च विनिन्दितो जातिभेद इत्याचक्षते । तदेतद्भ्रममात्रं शास्त्रीयवचनव्यवस्थानभिज्ञतामूलकं चेतिब्रूमः । यथा चैतत्तथा स्फुटीभविष्यति वज्रसूच्याः श्रीनिवासीयभाष्यावलोकन इति व्यापार्यतामत्र जिज्ञासुभिर्दृष्टिः ।

कतिपयानि पुनः पद्यानि वल्लभदेवप्रणीतायां सुभाषितावल्यां *श्रीमतोऽश्वघोषस्य नाम्नोपलभ्यन्ते । ततश्च प्रतीयते विद्यत एवापरः कोपि प्रबन्धो विद्यन्त एव वाऽपरेपि केपि प्रबन्धाः श्रीमतोऽश्वघोषस्येति ।

**बुद्धचरितं** पुनः प्रथमतः ख्रिस्तीयानां **पञ्चम्यां शताब्द्यां श्रीमता धर्मरक्षेण चीनभाषया समनूदितम् । सप्तम्यामष्टम्यां वा च शताब्द्यां** तिबेटीयभाषयास्यानुवादः संवृत्तः । उभयोरप्यनयोरष्टाविंशतिः खण्डा बुद्धचरितस्य । बुद्धरक्षाविभागान्तश्चात्रबुद्धचरितकथांश उपलभ्यते । तिबेटीय एव त्वनुवादः संस्कृतेन संवदति । यदि किलानुवादेत्र विद्यमानानां युक्ताः प्रतिशब्दा योज्येरंस्तदा मूलमेव संस्कृतं निष्पद्येतेति संभाव्यते कॉवेलमहाभागेन । चीनानुवादस्य च संपन्नोनुवाद इंग्रजीभाषामयः प्रागेव । तिबेटीयानुवादोऽपीदानीं डॉ. वेंझेलमहोदयेनेंग्रज्याऽनुवादयितुमारब्ध इत्याकर्ण्यते ।

## बुद्धचरितं च नाम

नैतदुत्तमं काव्यं किन्तु मध्यमश्रेणीयमित्यवोचाम । अत्र हि नोपवर्णिताः कियन्तश्चिदुपवर्णनीया अप्यंशाः । यथा द्वितीयसर्गे बुद्धस्य मातुः स्वःप्रयाणं

---

* सुभाषितावलौ १९८, ५२८, ५२९, ३१४२ इत्येतानि पद्यानि भदन्ताश्वघोषस्य ३१०० तमं च पद्यमश्वघोषस्य नाम्नोपलभ्यते ॥ दृश्यतां डॉ. पीटर्सन्महोदयेन प्रकाशिता सुभाषितावलिः ।

नाम्नैव निर्दिष्टं नैव तु प्रकाशितमत्र कवित्वं किमपि। क्वचित्पुनरनावश्यकोप्यंश उपवर्णितो यथा स्त्रीणां सुविस्तृतः स्वापोपवर्णनादिः। यथा वोपवने नारीजनचेष्टादिः। स चायमर्थ उपवर्ण्यमानो नैव कालिदासीयादिकाव्यवत्प्रगल्भतां भजते, प्रत्युत बहुषु स्थलेष्वश्लीलतां च ग्राम्यभावं च। यथा **प्रतियोगार्थिनी काचि**दित्यादौ। दोषान्तराण्यपि न खल्वत्र नैव सुलभानि। प्रकाशयन्ति हि तान्यत्र क्वचित्क्वचिदात्मानम्। यथा 'आर्षा**ण्यहासी**त्परमव्रतानि वैरा**ण्यहासी**च्चिरसंभृतानि।' (२-४३) 'यथैव पुत्रप्रसवे **ननन्द** तथैव पौत्रप्रसवे **ननन्द**।' (२-४३) इत्यादावनवीकृतत्वं 'नवोढुराजं **विजिगाय** लक्ष्म्या' इत्यादौ (१-२८) च्युतसंस्कारत्वं चेत्यादयः।

## कालिदासीयस्य यशसः कामयिता

किल कविरयं भूयःसु स्थलेषु तदीयायाः सरणेरनुकरणे प्रवृत्तः। यथा हि 'ततो मृगेन्द्रस्य मृगेन्द्रगामी' त्यादिषु चमत्कारविशेषसंजननार्थं प्रयुज्यन्ते मृगेन्द्रादिपदानि श्रीमता कालिदासेन, एवमनेनापि 'तं ब्रह्मविद्ब्रह्मविदं ज्वलन्तं' इत्यादौ [१-५६] प्रयुज्यन्ते। उपवर्णनसरणिश्च कालिदासेनानुसृतैवानुस्रियते क्वापि। यथा तृतीयस्मिन् सर्गे वनाय प्रस्थितस्य बुद्धस्यावलोकनार्थं नारीणां संरम्भः। एतत्किल रघुवंशवर्ति [७ म सर्गगतं]। नारीवर्णनमनुहरति। रघुवंशे पुनरेतत्स्वाभाविकं बुद्धचरिते च हठाकृष्टमिति विशेषः। यथा चैतत्तथाऽत्रत्यद्वितीयसर्गगतयोस्त्रयोदशसप्तदशयोरन्येषां च पद्यानामवलोकने स्पष्टम्। एवमपि हि विद्यत एवास्मिन्कविभावो विद्यत एव चायं श्रीमति कालिदासेऽपि। उक्तं हि 'पर्वते परमाणौ च पदार्थत्वं प्रतिष्ठितम्।' इति। रामायणीयसुन्दरकाण्डापेक्षया चैतत्प्रणीतस्य नारीजननिद्रोपवर्णनस्य मनोहारित्वं च प्रासङ्गिकत्वं चाचक्षाणानां व्यत्यस्तेव दृष्टिरित्यभिमन्यते हृदयमस्माकम्।

## जानकीहरणापेक्षया तु

काव्यस्यास्य मनोहारितामवश्यं स्वीकुर्मः। यत्पुनः संभाव्यते केनापि भट्टिसदृशी व्याकरणनदीष्णतैतस्येति तदेतदापाततो रम्यम्। वैयाकरणो हि भट्टिः कविपथे च कथमपि विन्यस्तचरणोऽश्वघोष इति। न हि कतिपयप्रयोगमात्रेण भट्टिसादृश्यमस्मिन्नारोपयितुं युक्तम्। न हि किल कश्चिदपि परमवैयाकरणो विजिगायेत्यादि प्रयुञ्जीत। प्रयोगवैचित्र्यं पुनर्भूयोभिराद्रियते। यथा रामायणे सुन्दरकाण्डे 'ररास भूमिर्न ततप भानुमान्ववौ न वायुः प्रचचाल चाचलः। कपेः कुमारस्य च वीक्ष्य संयुगं ननाद च द्यौरुदधिश्च चुक्षुभे।' इति प्रायोजि। एवमन्यत्रापि संदृश्यम्।

केषांचित्पुनः शब्दानामस्थाने परिवृत्तिसहिष्णुत्वमेतेनारोपितम्। यथा 'ह्रस्वतनूजकुक्षिकर्णम्' (५ मसर्गे) इत्यादौ।

सत्यप्येवं न खलु नात्र विद्योतन्ते चमत्कारीणि पद्यानि। अत्र पुनर्नैव शक्यान्येतान्युदाहर्तुमिति विरम्यते।

**बुद्धचरितं पुनरेतत्कं** वा प्रबन्धमवलम्ब्य संग्रथितं कविनेति नैव शक्यतेऽवधारयितुम् । संप्रति पुनर्ललितविस्तर एव प्राचीनतमोऽस्माभिरवलोकितो बुद्धचरितग्रन्थः । यद्यपि विद्यत एवाश्वघोषीये बुद्धचरिते कियानप्यत्रत्यो भागस्तथापि भूयानेवात्रानुक्तः । **ललितविस्तरगतान्येव पुनः पदानि कियन्तिचिदत्र बुद्धचरिते तस्मिन्नेवार्थे प्रयुज्यमानानि दृश्यन्ते** यथा ललितविस्तरे ' तत्र सर्वे शाक्यकुमाराः परमेणापि प्रयत्नेन व्यायच्छमाना न शक्नुवन्ति स्म तद्धनुरा रोपयितुं **प्रागेव** पूरयितुम् । ' इति ( १२ शेऽध्याये ) । अत्र च किं पुनरित्यर्थे ' प्रागेवे'ति प्रयुक्तम् । बुद्धचरितेऽपि च ' शोभयेत गुणैरेभिरपि तानुत्तरान्कुरून् । कुबेरस्यापि चाक्रीडं प्रागेव वसुधामिमाम् ।।' इत्यत्र तस्मिन्नेवार्थे । एवं तत्रैव ' तत्र भिक्षवो बोधिसत्वः पूर्वान्तत एव सुविदितसंसारदोषः संस्क्ले**नाध्याशयेनानर्थिक** ' इत्यत्राध्याशयपदमात्मा ( जीवा ) र्थे प्रयुक्तम् । बुद्धचरितेऽपि ' अध्याशयो वा स्फुटपुण्डरीक ' मित्यत्र ( १-९ ) तथैव । एवमन्यदपि द्रष्टव्यम् ।

बुद्धचरितस्याष्टमसर्गवर्ति त्रयोदशं पद्यं चामरकोशस्य रायमुकुटाख्यायां व्याख्यायां(१-१-२,३) उज्ज्वलदत्तस्य चोणादिसूत्रव्याख्यायां (१-१५६) संदृश्यते।

तदेवमुपहृतो यथामति बुद्धचरितविषयकोऽयमर्थोऽस्माभिरिति शिवम् ।

**श्रीअप्पाशर्मा विद्यावाचस्पतिः ।**

---

## बुद्धचरितसर्गार्थसंग्रहः ।

**प्रथमे सर्गे** -- आसीत्किल कपिलवस्तुनि नाम नगरे शुद्धोदनो नाम भूपालः । अनपत्यतया दूयमानस्य चास्य महिष्यां श्रीमत्यां मायादेव्यां करीन्द्रस्वरूपमास्थाय तुषितशरीराच्च्युतो बोधिसत्त्वः प्राविशत् । पूर्णेषु च मासेषु लुम्बिनीं नामोपवनं गता मायादेवी यावत्कस्यचित्तरोः शाखामालम्बते तावत्तस्याः कुक्षिं निर्भिद्य बोधिसत्वः प्रादुरभूत् । जातमात्रं चैनं देवा जगृहुः । पाण्डरं चास्य शिरस्यातपत्रं दधुः । निर्मले चास्य शिरसि शिशिरोष्णवीर्ये अम्बुधारे न्यपतताम् । शुभानि च निमित्तानि प्रादुरभूवन् । एष किल ते पुत्रो निर्वाणपथोपदेष्टा भविष्यतीति राजानं ब्राह्मणा जगदुः । असितश्च महर्षिरुपागत्य तदेव निवेदयामास । अथ शुभे मुहूर्ते शिबिकाधिरूढा देवी लुम्बिन्या नगरं प्राविक्षत् । आसीच्च प्रमोदैकमयं कपिलवस्तुसंज्ञं नगरमशेषमपि ।

**द्वितीयस्मिन्सर्गे** -- बोधिसत्वस्य ( बुद्धस्य ) च जन्मनः प्रभृति राज्ञः शुद्धोदनस्य सर्वेप्यर्थाः सिद्धा अभवन्निति राज्ञा ' सर्वार्थसिद्धि' रित्यकारि नामैतस्य । माया तु देवी ततः परमेव दिवं जगाम । ततः प्रभृति च कुमारोऽयं मातृष्वस्रानुपालितः । अथातीतबालभावः समधीतविद्यश्च कुमारः कुलीनां यशोधरां नाम नार्यामधिगतवान् । राजा तु नास्य मन्दिराद्बहिः कदाचिदपि गमनमनुजानाति स्म । सो पि च कामपण्डिताभिर्नारीभी रममाणस्तत्रैवास्ते । राजा त्वतः परं धर्ममेव समाश्रितवान् । गच्छता च कालेन यशोधरा पुत्रं प्रासूत यस्य किल राहुल इत्यासन्नाम ।

**तृतीयस्मिन् सर्गे**—ततः कदाचिद्रमणीयो वनप्रदेश इत्याकर्ण्य बहिर्गन्तुमियेष कुमारः। राजापि यथा न कस्याप्युद्वेगजनकस्य पथि प्रवेशः स्यात्तथा व्यवस्थाप्य गमनमस्यान्वमोदिष्ट। मार्गे च देवैरुपस्थापितं वर्षीयांसमालोक्य कुमारः सारथिं पप्रच्छ कुतोऽयमेवंविध इति। सारथिश्च जरयाभिभूतत्वादिति प्रत्यवदत्। पुनश्च पृष्टः सर्वेषामप्यवश्यम्भाविनी जरा भवतोऽप्येषा स्यादेवेति प्रत्यभाषिष्ट। तदाकर्ण्य चोद्विग्नः कुमारः प्रतिन्यवृतत्। पुनरपि च कदाचिद्बहिः प्रयात आमयाविनं कञ्चिदद्राक्षीत्। आमयोऽपि सर्वेषामिवात्मनोऽपि भावीति च सारथेर्व्यजानात्। रोगतश्चभीत उद्वेगं प्राप्तः प्रतिन्यवर्तिष्ट। पुनरपि च रथं सूतं च परिवर्त्य राज्ञा प्रस्थापितः सोऽयं कुमारः प्रेतमद्राक्षीत्। अवश्यं भावी किल मनुष्यमात्रस्य मृत्युरिति च सारथेरवगत्य प्रतिगमनकामुकः सारथिमादिदेश। सारथिस्तु नृपाज्ञया स्यन्दनमुपवनमेव प्रापयामास।

**चतुर्थे सर्गे**--तत्र चोपवने समुपागता अपि स्त्रियो नैनं व्यामोहयितुं प्रबभूवुः। निवृत्तव्यापाराश्चैता उदायिना नाम राज्ञः पुरोहितस्य पुत्रेण प्रोत्साहिता नानाविधैर्व्यापारैर्बुद्धस्य विलोभने प्रावर्तन्त। स तु नैव तत्रारमत। ततश्चोदायिना बोधितो यथोचितं प्रत्यवदत्। तेन च विफलव्यापाराः स्त्रियो नगरं प्राविक्षन्।

**पञ्चमे सर्गे**-पुनरपि च राज्ञानुमतस्तुरङ्गमारुह्य सदृशैरानुयात्रिकैर्बहिः प्रातिष्ठत। तत्र च कृषतः कृषीवलानालोकमानस्य दुद्राव हृदयमेतस्य। विनिवर्तितानुयात्रिकश्च विजन उपविष्टः समाधिं निर्वर्तयामास। तत्र चैनं कोपि भिक्षुरुपातिष्ठत्। कुमारेण च पृष्टोयं 'भिक्षुरहं मोक्षार्थी प्रावजमि'ति। प्रत्याह। तस्माच्च गृहीतसंकेतः प्रतिनिवृत्य राजानमब्रूत वनं यास्यामीति। राजा तु मा मेति प्रावोचत्। 'यद्येवं भव मरणाद्यभावविषये मे प्रतिभूः।' इति बुद्धः प्राह। राज्ञा पुनरसावश्रुपातैः प्रतिनिवर्तितः। सचिवाश्चैनमुपादिदिक्षुः। ततश्च प्रवृत्तायां निशयसौ मन्दिरं प्रविवेश। तत्रापि चैनं नार्य उपजग्मुः। अर्धरात्रे पुनरेता देवैर्निद्रामनुप्रापिताः। द्वाराणि चोद्घाटितानि। बुद्धोपि प्रासादपृष्ठादवतीर्य गृहकक्ष्यां गत्वा छन्दकं नामाश्वपालं प्रतिबोध्य कण्ठकं नाम तुरङ्गमानाययामास। तेन चोपस्थापितं तुरङ्गं साहाय्यं म आधत्स्वेति सालिङ्गनं वयस्यमिवोपदिश्यारुह्य च वनं प्रातिष्ठत। प्रस्थितश्च नव प्राग्बोधिप्राप्तेः कपिलाह्वयं नगरं प्रवेक्ष्यामीति निजगाद। प्रभातायां च निशि बहूनि योजनान्यतिक्रान्तवांस्तुरग। इति।

---

# विशेषतो द्रष्टव्यम्।

प्रथमसर्गवर्तिन एकविंशस्य पद्यस्य व्याख्यायां बिभ्रति वहन्ति भृत्वो धारणार्थात्ङ्कट्। इत्यत्र 'भजन्ति सेवन्ते' इति पठनीयम्। **क्षम्यतां प्रियपाठकैर्यद्यत्रानवधानवशात्किमप्यशुद्धं नामावशिष्टं स्यात्।** इति शिवम्।

श्रीशिवः शरणम् ।

# बुद्धचरितम् ।

## प्रथमः सर्गः ।

**श्रियं परार्ध्यां विदधद्विधातृजित् तमो निरस्यन्नभिभूतभानुभृत् ।**
**नुदन्निदाघं जितचारुचन्द्रमाः स वन्द्यतेऽर्हन्निह यस्य नोपमा ॥१॥**

यं विश्वाधिकमामनन्ति मुनयो यस्मात्परं नापरं
यस्मादेतदुदेति विश्वमखिलं यः पात्यदश्चात्ति च ।
भक्तिर्यत्र निरुत्तराभिलषितानर्थान्प्रसूतेऽखिला-
न्सोऽयं चेतसि नः स्फुरत्वविरतं शीतांशुचूडामणिः ॥ १ ॥
अश्वघोषकवीन्द्रेण प्रणीते प्रवितन्यते ।
श्रीबुद्धचरिताभिख्ये काव्ये व्याख्या परिस्फुटा ॥ २ ॥
इयमन्वयमालम्ब्याशेषमर्थं विवृण्वती ।
हिताय कल्पतां व्याख्या शिशूनां बालबोधिनी ॥ ३ ॥
अस्यां च संशयोच्छित्त्यै कोशव्याकरणादिकम् ।
यथास्थानमविस्तीर्णं सप्रमाणं निवेश्यते ॥ ४ ॥

( १ ) इह खलु श्रीमानश्वघोषो नाम कविर्बुद्धचरितं नाम पद्यमयं काव्यं विरचयिष्यंस्तदङ्गतया कृतं स्वेष्टदेवताप्रणतिलक्षणं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नाति । श्रियमिति। **इह** अस्मिन् भुवने **यस्य उपमा** सादृश्यं सदृशं पदार्थान्तरमिति यावत्। **न** नास्ति **सः अर्हन्** प्रशंसनीयो बुद्धः वन्द्यते नमस्क्रियते । अर्हः प्रशंसायामिति शतृप्रत्ययः। 'अर्हंस्तु क्षपणे बुद्धे' इति मेदिनी । निरुपमत्वमुपपादयति पादत्रयेण। परार्ध्यां श्रेष्ठां श्रियं निर्वाणलक्षणां विदधत्कुर्वन् जनयन्निति यावत्। धाञः शता। एवमुत्तरत्रापि। विधातृजित् विधातारं ब्रह्माणं जयति तथाभूतः। जयतेः क्विप्। ब्रह्मा हि श्रियं जनयत्ययं पुनः परार्ध्यां श्रियमिति युज्यतेऽस्य विधातृजेतृत्वमिति भावः। तमः अन्धकारं पक्षेऽज्ञानं च निरस्यन् नितरां पुनरनागमाय अस्यन् दूरे क्षिपन् अत्यन्तं निर्मूलयन्नित्यर्थः। अभिभूतभानुभृत् अभिभूतः पराभूतः आत्मनोऽपेक्षयाऽपकृष्टत्वं प्रापितो भानुभृत्सूर्यो येन तथाभूतः। सूर्यो हि तमः क्षिपति, नैव पुनरत्यन्तमुन्मूलयतीति जघन्योऽयमर्हदपेक्षयेति भावः। निदाघं ग्रीष्मं पक्षे

**आसीद्विशालोत्तमसानुलक्ष्म्या पयोदपङ्क्त्येव परीतपार्श्वम् ।**
**उदग्रधिष्ण्यं[1] गगनेऽवगाढं पुरं महर्षेः कपिलस्य वस्तु ॥ २ ॥**

**सितोन्नतेनैवं[2] नयेन हृत्वा कैलासशैलस्य यदग्रशोभाम्[3] ।**
**भ्रमादुपेतान्वहदम्बुवाहान्[4] संभावनां वां[5] सफलीचकार ॥ ३ ॥**

---

निदाघसदृशं दुःखत्रयं च नुदन् अत्यन्तं निराकुर्वन् जितचारुचन्द्रमाः जितः अपकर्षं प्रापितश्चारुश्चन्द्रमाः येन तथाभूतः। चन्द्रोहि शीतिमानमुत्पादयन्नपि निदाघं नात्यन्तं विनाशयतीति निकृष्ट एवायमर्हत इति भावः। एवं च जगति सर्वापेक्षयोत्कृष्टेभ्योऽपि ब्रह्मादिभ्य उत्कृष्टत्वाद्युक्तमेवास्य निरुपमत्वमिति भावः। अत्रादिमेन पादत्रयेणार्हत औपम्यशून्यत्वे हेतुप्रतिपादनात्काव्यलिङ्गमलङ्कारः। प्रतिचरणं चोपमानभूतेभ्यो विधात्रादिभ्य उपमेयस्यार्हत आधिक्यप्रतिपादनात्तत्र च हेतूपन्यासात् उक्तहेतुको व्यतिरेकोऽलङ्कारः। अनन्वयश्च व्यङ्ग्यः। एतेषां च लक्षणानि 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्।' 'आधिक्यमुपमेयस्योपमानान्न्यूनताथवा। व्यतिरेक एक उक्ते हेतौ' इति च दर्पणे। वंशस्थविलं वृत्तम्। वदन्ति वंशस्थविलं जतौ जरौ' इतिगङ्गादासः

(२) अथ वस्तु समारभमाणो बुद्धपितू राजधानीमुपवर्णयति आसीदित्यादिभिः सप्तभिः। आसीदिति। पयोदपङ्क्त्या मेघानां मालयेव विशालोत्तमसानुलक्ष्म्या विशाला विस्तृता उत्तमाश्च ये सानवो वनानि तेषां लक्ष्म्या शोभया परीतपार्श्वं परीतं व्याप्तं पार्श्वं समीपभागो यस्य तथाभूतं 'सानुरस्त्री वने प्रस्थे।' इति मेदिनी। उदग्रधिष्ण्यं उदग्राण्युन्नतानि धिष्ण्यानि गृहाणि यत्र तथाभूतम्। 'उच्चप्रांशून्नतोदग्रा' इत्यमरः। 'धिष्ण्यं स्थानोडुवेश्मसु।' इति हैमः। अत एव गगने आकाशे अवगाढं प्रविष्टं, अभ्रंकषमित्यर्थः। गाहतेः प्रवेशार्थकान्निष्ठा। महर्षेः ऋषिश्रेष्ठस्य कपिलस्यैतन्नाम्नः वस्तु द्रव्यभूतं अतिप्रियमिति भावः। पुरं नगरं। 'सत्त्वं द्रव्यं च वस्तु च।' इति शब्दकल्पद्रुमे। कपिलवस्तुसंज्ञकं नगरमिति यावत्। यद्वा वस्तु निवासस्थानं, वसेस्तुन्नित्यौणादिकस्तुन्प्रत्ययः। आसीत्। पूर्वार्धे उपमा उत्तरार्धे गम्योत्प्रेक्षालङ्कारः। उपजातिवृत्तम्। एतदेवातः परं सर्गान्तं यावत्प्रायेण। लक्षणं तु वक्ष्यते।

(३) यदिति। यत् पुरं कर्तृ। सितोन्नतेनैव सितेन निर्दोषत्वाच्छुभ्रेण उन्नतेन उत्कर्षं प्राप्तेन एव नयेन नीत्या कैलासशैलस्य कैलासपर्वतस्य। षष्ठ्या अग्रेणसंबन्धः। अग्रशोभां शिखरशोभां अग्रां श्रेष्ठां वा शोभां हृत्वा अपहृत्य। भ्रमात् कैलासभ्रान्त्या उपेतान्समीपप्राप्तान् अम्बुवाहान्मेघान् वहत् धारयत् संभावनां

---

१ धिष्णोर्गगणे। धिष्ण्यं गगणे। धिष्टोर्गगने। २ नेव। ३ यदभ्रशोभाम्।
४ वहदवभ्रवाहान्। ५ स्वां।

रत्नप्रभोद्भासिनि यत्र लेभे तमो न दारिद्र्यमिवावकाशम् ।
परार्ध्यपौरैः सहवासतोषात् कृतस्मितेवातिरराज लक्ष्मीः ॥ ४ ॥
यद्वेदिकातोरणसिंहकर्णै रत्नैर्दधानं प्रतिवेश्म शोभाम् ।
जगत्यदृष्ट्वै[1] समानमन्यत्स्पर्धां स्वगेहैर्मिथ एव चक्रे ॥ ५ ॥

---

स्वजन्म सफलीचकार । वेत्युत्प्रेक्षायाम् । उत्कर्षातिशयविशिष्टत्वाज्जन्मनः साफल्यम् । उदग्रसदनतया गगने प्रविष्टत्वात्तत्र प्रसक्तेषु मेघेष्वसावुत्प्रेक्षा । 'अधिके च प्रधाने च' त्यग्रशब्दार्थे मेदिनी ।

( ४ ) रत्नेति । रत्नप्रभोद्भासिनि रत्नानां कान्त्या प्रकाशमाने यस्मिन्नगरे तमः अन्धकार इव दारिद्र्यं निर्धनत्वं अवकाशं स्थानं न लेभे न प्राप । प्रकाशविशिष्टत्वाल्लक्ष्मीयुक्तत्वाच्चेति भावः । यत्र च परार्ध्यपौरैः श्रेष्ठैर्नागरिकैः सहवासतोषात् समागमजन्यात्संतोषात् हेतोः कृतस्मितेव कृतं प्रकटितं स्मितं मन्दहासो यया तथाभूतेव लक्ष्मीः अतिरराज अत्यन्तं शुशुभे । उत्कृष्टैः पौरैः सहवासेन संतुष्टा यत्र सानन्दं न्यवात्सीदिति भावः । एषोऽपि दारिद्र्यस्यानवकाशे हेतुः । 'परार्ध्याग्रप्राग्रहरे' ति श्रेष्ठपर्यायेष्वमरः । पदगतहेतुकं वाक्यगतहेतुकं च काव्यलिङ्गमलङ्कारः । तमसो दारिद्र्यस्य च प्रस्तुतस्यालब्धावकाशत्वरूपैकधर्माभिसम्बन्धात्तुल्ययोगिता च । 'पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् । एकधर्माभिसंबन्धः स्यात्तदा तुल्ययोगिता । ' इति लक्षणात् ।

( ५ ) यदिति । यत् पुरं प्रतिवेश्म वेश्मनि वेश्मनि प्रतिगृहमित्यर्थः । वीप्सायामव्ययीभावः । रत्नैः रत्नमयैः वेदिकातोरणसिंहकर्णैः वेदिका आसनाद्यर्था उन्नताः परिष्कृता भूमयश्च तोरणानि बहिर्द्वाराणि च तेषां सिंहरूपैः कर्णैः कोणैरिति यावत् । त्रिभुजं हि क्षेत्रं कर्ण इत्युच्यते ज्योतिषिकैस्तत्सादृश्यात्कर्णशब्दः कोणे लाक्षणिकः । तैः करणभूतैः । वेदिकाया हि चतुर्षु कोणेषु सिंहमूर्तयो निवेश्यन्ते स्म प्राचीनैः । बहिर्द्वारेऽपि वन्दनमालिकाबन्धनाद्यर्थमुपरिकोणद्वये । शोभां दधानं । ताच्छील्येऽयं ताच्छील्येत्यादिना चानश् । नैव तु शानच् फलस्य कर्तृगामित्वाभावात् । जगति समानमात्मनस्तुल्यं अन्यत् अदृष्ट्वा अनालोक्यै इव स्वगेहैः आत्मनि वर्तमानैर्गृहैः मिथः परस्परं प्रत्येव स्पर्धां अभिभवेच्छां चक्रे कारयामासेतियावत् । अन्तर्भावितण्यर्थोऽत्र करोतिः । गृहाणामुत्तरोत्तरमधिकाधिकश्रेष्ठत्वात्परस्पराभिभवकामुकत्वमिव यस्मिन्नालक्ष्यतेति भावः। आत्मनः सदृशवस्त्वन्तराभावात्स्पर्धाकरणस्य प्रयोजनं नास्तीति गृहाण्येवात्मनि विद्यमानानि परस्परस्पर्धायां प्रवर्तयामासेत्यर्थः । लोकातिशयसंपद्वर्णनादुदात्तमलङ्कारः । 'लोकातिशयसंपत्तिवर्णनोदात्तमुच्यत' इति लक्षणात् । उत्प्रेक्षा चेत्यनयोः संकरः ।

---

१ अदृष्ट्वैव ।

रामामुखेन्दूनभिभूतपद्मान्यत्रोपयातोऽप्यविमान्य भानुः ।
सन्तापयोगादिव वारि वेष्टुं पश्चात्समुद्राभिमुखः प्रतस्थे ॥ ६ ॥

शाक्यार्जितानां यशसां जनेन दृष्टान्तभावं गमितोऽयमिन्द्रः ।
इति ध्वजैश्चारुचलत्पताकैर्यन्मार्ष्टुमस्याङ्कमिवोदयच्छत् ॥ ७ ॥

कृत्वाऽपि रात्रौ कुमुदप्रहासमिन्दोः करैर्यद्रजतालयस्थैः ।
सौवर्णहर्म्येषु गतार्कपादैर्दिवा सरोजद्युतिमाललम्बे ॥ ८ ॥

( ६ ) रामेति । यत्र यस्मिन्नगरे उपयातः प्राप्तो भानुः सूर्यः कर्ता परिभूतपद्मान् परिभूतानि विजितानि अधःकृतानीति यावत् पद्मानि कमलानि यैस्तथाभूतान् रामाखेन्दूनूरमणीयस्त्रीमुखरूपांश्चन्द्रान् । पद्मपरिभवो हि स्वभावश्चन्द्रस्य । आत्मबान्धवानामवमन्तॄनित्यर्थः । अविमान्य अवमानमप्रापय्य । अवमन्तुमप्रभूयेति यावत् । सन्तापयोगात् अवमाननासामर्थ्यजन्यस्य संतापस्य योगात् इवेत्युत्प्रेक्षा वारि जलं वेष्टुं प्रवेष्टुम् । संतप्ता हि तापनिर्वापणाय जलं प्रविशन्तीति । पश्चात्समुद्राभिमुखः पश्चिमसमुद्राभिमुखः सन् प्रतस्थे प्रययौ । समवप्रविभ्यः स्थ इत्यात्मनेपदम् । मुखचन्द्राणां सूर्यकृतम्लानिसंपर्कराहित्येन व्यतिरेको व्यज्यते । भानौ दुर्बलव्यवहारारोपाच्च समासोक्तिः । 'समासोक्तिः समैर्यत्रकार्यलिङ्गविशेषणैः । व्यवहारसमारोपः प्रकृतेऽन्यस्य वस्तुन' इति लक्षणात् । उत्प्रेक्षा च । तदेषां सङ्करः ।

( ७ ) शाक्येति । जनेन कर्त्रा अयं पुरोवर्ती इन्द्रः स्वर्गाधिपतिः । ध्वजानामत्युन्नतत्वेन स्वर्गं प्रविष्टत्वादयमितिनिर्देशः । शाक्यार्जितानां शाक्यैरिक्ष्वाकुवंश्यैर्नृपविशेषैः संपादितानां यशसां दृष्टान्तभावं दृष्टान्तत्वं गमितः प्रापितः । इन्द्रतुल्यं शाक्यानां यश इत्युक्तेरिति भावः । शाक्यशब्दप्रवृत्तिनिमित्तं त्वाह भरतः । 'शाकवृक्षप्रतिच्छन्नं वासं यस्मात्प्रचक्रिरे । तस्मादिक्ष्वाकुवंश्यास्ते भुवि शाक्या इति स्मृता' इत्यमरटीकायाम् । दृष्टान्तशब्दश्चात्र तत्प्रयोजके लाक्षणिकः । इतिहेतोः यत्पुरं कर्तृ चारुचलत्पताकैः चार्व्यो मनोहराश्चलन्त्यश्च पताका वसनखण्डविशेषा येषु तथाभूतैर्ध्वजैः करणभूतैः अस्य इन्द्रस्य अङ्कं सादृश्यप्रयोजकं यशोरूपं चिन्हं प्रमार्ष्टुं प्रोञ्छयितुं निराकर्तुमितियावत् उदयच्छदिव उद्योगं कृतवदिव । उत्पूर्वाद्यमेर्लङ् । इषुगमियमामिति च्छः । एतेन ध्वजानामत्युन्नतत्वं गम्यते । अतिशयोक्त्यनुप्राणितोत्प्रेक्षालङ्कारः ।

( ८ ) कृत्वेति । यत् पुरं कर्तृ रात्रौ रजतालयस्थैः रूप्यमयेषु गृहेषु तिष्ठद्भिः । तत्र संक्रान्तैरिति यावत् । इन्द्रोश्चन्द्रस्य करैः किरणैः करणभूतैः कुमुदानां चन्द्रविकासिकमलानां प्रहासं परिहासं कृत्वाऽपि । तदधिकां श्रियं प्राप्यापीत्यर्थः । दिवा दिवसे सौवर्णहर्म्येषु सुवर्णमयेषु धनिनां गृहेषु । सप्तम्या गतेत्यनेन संबन्धः । गतार्क-

१ यत्रापयातो । २ योगादिव । ३ इपोद ।

**महीभृतां मूर्ध्नि कृताभिषेकः शुद्धोदनो नाम नृपोऽर्कबन्धुः ।**
**अध्याशयो वा स्फुटपुण्डरीकं पुराधिराजं तदलंचकार ॥ ९ ॥**

**भूभृत्पराध्योऽपि सपक्ष एव प्रवृत्तदानोऽपि मदानुपेतः ।**
**ईशोऽपि नित्यं समदृष्टिरासीत्सौम्यस्वभावोऽपि पृथुप्रतापः ॥१०॥**

---

पादैः गतैर्विद्यमानैरर्कस्य सूर्यस्य पादैः किरणैः सरोजद्युतिं सूर्यविकासिकमलकान्तिं आललम्बे समाश्रितवत्। तत्तुल्यं बभास इति भावः। दिवानिशमप्येतच्छोभातिशयमेव बिभरामासेति भावः। पूर्वार्धे उपमोत्तरार्धे च सरोजद्युतिपदेन सादृश्याक्षेपान्निदर्शनालङ्कारः। गतार्कपादैरित्यसमर्थसमास इति प्रतिभाति।

(९) एवं नगरमुपवर्ण्य तदधिपतिमुपवर्णयति महीभृतामित्यादिभिः सप्तभिः। महीभृतां भूपानां मूर्ध्नि मूर्धवत्प्राधान्येन संमते सर्वैरपि राजभिः शिरसा श्लाघनीये राज्य इति भावः। कृताभिषेकः अर्कबन्धुः सूर्यस्य बान्धवः सूर्यवंश्य इत्यर्थः। 'बन्धुः स्यात्पुंसि बन्धूके मित्रे भ्रातरि बान्धवे।' इति मेदिनी। शुद्धोदनो नाम नृपः कर्ता। अध्याशयः उत्कृष्ट आशयः कर्णिकाख्यः स्फुटपुण्डरीकं विकसितं श्वेतं कमलमिव तत्पुराधिराजं श्रेष्ठं नगरं अलंचकार शोभयामास। 'व्याकोशविकचस्फुटा' इति 'पुण्डरीकं सिताम्भोज' मिति चामरः यद्वा अध्याशयः अधि प्रधानभूत आशेते निवसति शरीर इत्यध्याशयो जीवः। अधिगत आशयं वासनामविद्यावशादिति वाध्याशयो जीवः। आशयो वासनेति योगभाष्ये बादरायणः। स्फुटं विकसितं पुण्डरीकं हृदयं कमलमिवेत्यर्थः। हृत्पुण्डरीकान्तरसन्निविष्टमिति स्कान्दादौ वचनात्। 'आशय आश्रय' इति हैमः। उपमालङ्कारः।

(१०) भूभृदिति। य इत्यध्याहार्यम्। यो भूपः भूभृत्पराध्यः भूभृत्सु पर्वतेषु परार्ध्यः श्रेष्ठः सन्नपि सपक्षः पक्षसहित इति विरोधे भूभृत्सु राजसु श्रेष्ठः सपक्षः सहाय इति परिहारः। प्रवृत्तदानोऽपि प्रवृत्तं प्रसृतं दानं मदजलं यस्मात्तथाभूतोऽपि मदेन मत्ततयाऽनुपेतः न युक्त इति विरोधे प्रवृत्तं प्रचलितं दानं पात्रे द्रव्योत्सर्गो यस्येति मदानुपेतः गर्वेणास्पृष्ट इति च परिहारः। ईशः शङ्करोऽपि समदृष्टिः अविषमनेत्र इति विरोधे ईशः ऐश्वर्यसंपन्नः समदृष्टिः सर्वत्र समदर्शनश्चेति परिहारः। सौम्यस्वभावः सौम्यः अपरितापनः स्वभावः शीलं यस्य तथाभूतोऽपि पृथुप्रतापः पृथुर्विपुलः प्रतापः प्रकृष्टस्तापो यस्मात्तथाभूत इति विरोधे पृथुः पराक्रमो यस्येति परिहारः। आसीत्। महेन्द्रेण किल पुरा पर्वतानां पक्षाणि च्छिन्नानीत्यत्रानुसंधेयम्। 'भूभृन्नाद्रौ महीपतौ' इति 'दानं गजमदे त्यागे' इति 'मदो रेतसि कस्तूर्यां गर्वे' इति 'ईशः प्रभौ महादेव' इति 'प्रतापस्तापतेजसो' रिति च मेदिनी। विरोधाभासोऽलङ्कारः। 'आभासत्वे विरोधस्य विरोधाभास इष्यत' इति लक्षणात्।

---

१ समदृष्टिपातः

भुजेन यस्याभिहताः पतन्तो द्विषद्द्विपेन्द्राः समराङ्गणेषु ।
उद्वान्तमुक्ताप्रकरैः शिरोभिर्भक्त्येव पुष्पाञ्जलिभिः प्रणेमुः ॥ ११ ॥

अतिप्रतापादवधूय शत्रून्महोपरागानिव तिग्मभानुः ।
उद्द्योतयामास जनं समन्तात्प्रदर्शयन्नाश्रयणीयमार्गान् ॥ १२ ॥

धर्मार्थकामा विषये[1] मिथोऽन्यं न वेषमाचक्रमुरस्य नीत्या ।
विस्पर्धमाना इव तूग्रसिद्धेः स्वगोचरे[3] दीप्ततरा बभूवुः ॥ १३ ॥

( ११ ) यस्य राज्ञः शुद्धोदनस्य भुजेन कर्त्रा समराङ्गणेषु युद्धभूमिषु अभिहतास्ताडिता अत एव पतन्तः द्विषद्द्विपेन्द्राः द्विषन्तः शत्रव एव द्विपेन्द्रा मत्तत्वाद्गजश्रेष्ठाः उद्वान्तमुक्ताप्रकरैः उद्वान्ता उत्सृष्टा मुक्तानां शिरसि भूषणार्थं धृतानां मौक्तिकानां प्रकराः समूहा यैस्तथाभूतैः शिरोभिर्मस्तकैः करणभूतैः भक्त्या पूज्यविषयकेण प्रेम्णा पुष्पाञ्जलिभिः अञ्जलिपरिमितानि पुष्पाणि विकीर्येति भावः । प्रणेमुरिव । अनेन प्रभावातिशयो व्यज्यते । शिरसां चूर्णीभावेनोद्वान्तमुक्ताप्रकरत्वसाम्याच्छत्रुषु द्विपेन्द्रत्वारोपः ।

( १२ ) अतीति । य इत्यनुवर्तते । यो राजा तिग्मभानुः तिग्माः प्रखराभानवः किरणा यस्य स सूर्यः उपरागान् ग्रहानिव अतिप्रतापात् तेजोविशेषण शत्रून् अवधूय निराकृत्य आश्रयणीयमार्गान् आश्रयणीयान्मार्गान् प्रदर्शयन् जनं लोकं समन्तात्सर्वत उद्द्योतयामास उज्ज्वलीचकार । 'उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च ।' इत्यमरः । भूयांसः किल चन्द्रमस उपरागा अल्पीयांस एव तु भानोस्तत्र च प्रतापातिशयशालित्वमेव हेतुरिति मन्यमानस्येयमुक्तिरश्वघोषस्य । शत्रुभिर्व्याकुलीकृतत्वात्सन्मार्गाणां तदुन्मूलनेन समाश्रयणीयं मार्गं दर्शयन्नित्युक्तम् ।

( १३ ) धर्मेति । अस्य राज्ञो नीत्या नयेन धर्मार्थकामाः पुरुषार्थविशेषाः मिथः अन्योन्यस्य विषये अन्यं वेषं आकारं स्वीयं स्वरूपं परित्यज्यान्यदीयं स्वरूपमित्यर्थः। न आचक्रमुः आक्रान्तवन्तः न स्वीकृतवन्त इत्यर्थः । सर्वेऽपि पुरुषार्थाः पारमार्थिकमात्मनः स्वरूपमालम्ब्यैवावास्थिता न तु लोभादिवशाद्रूपान्तरमालम्बितवन्त इति भावः । किन्तर्हि ? उग्रसिद्धेः तीव्रायाः वृद्धेः । हेतौ पञ्चमी । तीव्रां वृद्धिमुद्दिश्येत्यर्थः । विस्पर्धमानाः विशेषतः परमभिभवितुकामाः । इवेति गम्यम् । स्वगोचरे आत्मनो विषये । स्वस्थान इति यावत् । दीप्ततराः अतिशयेन भास्वरा बभुवुः । वृद्धिप्राप्तिविषये परस्परं स्पर्धमाना इव दिदीपिरे व्याजमूलकास्तु सुतरामेव नासन्निति भावः । 'सिद्धिः स्त्री योगनिष्पत्तिपादुकान्तर्धिवृद्धिषु ।' इति मेदिनी 'वेषः संस्थानविशेष' इति सप्तशतीव्याख्या । शान्तोऽप्येष दृश्यते ।

---

१ विषयं २ वेश ३ सुगोचरे

**उदारसंख्यैः सचिवैरसंख्यैः कृताग्रभावः स उदग्रभावः ।**
**शशी यथा भैरकृतान्यथाभैः शाक्येन्द्रराजः सुतरां रराज ॥ १४ ॥**

**तस्यातिशोभाविसृतातिशोभा रविप्रभेवास्ततमःप्रभावा ।**
**समग्रदेवीनिवहाग्रदेवी बभूव मायापगतेव माया ॥ १५ ॥**

---

( १४ ) उदारेति । यथा शशी चन्द्रः अकृतान्यथाभैः न कृता प्रकटीकृता अन्यथा विभिन्नप्रकारा विरुद्धेतियावत् आभा कान्तिर्यैः तथाभूतैः भैः नक्षत्रैः । तथेति शेषः । उदारसंख्यैः उदारा महती संख्या द्वित्वादिर्येषां तैरपि असंख्यैः संख्याशून्यैः इति विरोधे उदारा महती संख्या विचारो ज्ञानं वा येषां तैरिति परिहारः । 'उदारो दातृमहतो'रिति 'संख्या स्यादेकद्व्यादिविचारयोः।' इति च मेदिनी । सचिवैः अमात्यैः कृताग्रभावः कृतः अग्रभावः श्रेष्ठत्वं यस्मिन् तथाभूतोऽपि उदग्रभावः उद्गतः अग्रभावः श्रेष्ठत्वं यस्मात्तथाभूत इति विरोधे उदग्रः उन्नतो भावः स्वभावो यस्य तथाभूत इति परिहारः । उदारस्वभाव इत्यर्थः । 'उच्चप्रांशून्नतोदग्र।' इत्यमरः । 'भावः सत्तास्वभावाभिप्राय' इतिमेदिनी। शाक्येन्द्रराजः शाक्येषु शाक्यवंशोत्पन्नेषु क्षत्रियेषु इन्द्र इव श्रेष्ठः स चासौ राजा च। शुद्धोदन इत्यर्थः । राजाहःसखिभ्य इति टच् । सुतरामत्यन्तं रराज शुशुभे । विरोधाभासश्चोपमा चालङ्कारः।

( १५ ) अथेदानीं राज्ञः शुद्धोदनस्य सहधर्मचारिणीं देवीं मायामुपवर्णयति । तस्येति । तस्य राज्ञः अतिशः बहुलया भया शरीरप्रभया विसृता प्रसृता अतिशोभा अत्यन्ता शोभा यस्यास्तथाभूता, रविप्रभेव सूर्यप्रभेव अस्ततमःप्रभावा अस्तः सुदूरं क्षिप्तः तमसः रविप्रभापक्षे अन्धकारस्य राज्ञीपक्षेतु पातकस्य प्रभावः सामर्थ्यं यया। पातकासंस्पृष्टेत्यर्थः । मायापगता मायाया अघटितघटनाया इति यावत् पक्षे मायाया दम्भतः अपगता दूरीभूता एव, मायासंसर्गरहितैवेत्यर्थः। माया एतन्नामा स्त्री। दुर्गा चेति गम्यते। समग्रदेवीनिवहाग्रदेवी समग्राणां देवीनां देवशक्तीनां पक्षे राज्ञीनां च निवहे समूहे अग्रा प्रधाना देवी देवशक्तिः पक्षे राज्ञी च । पट्टराज्ञीत्यर्थः । बभूव आसीत्। 'देवी भट्टारिकायां राज्यां' इति विश्वः । देवी सामान्यदेवपत्नीति शब्दकल्पद्रुमः। चण्ड्यां तु देवशक्तिष्वपि प्रयुज्यमानो देवीशब्दः संदृष्टः । 'देव्यः क्रोधसमन्विता' इत्यादौ । 'अघटितघटनापटीयसी माया' इति शब्दकल्पद्रुमे । तस्याश्च कार्यमपिमायापदेन व्यवह्रियते । दुर्गायां तु मायाशब्दश्चण्ड्यामनेकशः प्रयुज्यमानो दृष्टः । 'मायादम्भाद्रिशृङ्गेषु' इतिहैमः । अत्र च प्रकरणेन मायादेवीरूपेऽर्थे समवबोधितेऽपि व्यञ्जनया दुर्गा बोध्यते । तदिहाभिधाशक्तिमूलाव्यञ्जना । उपमा चात्र ध्वन्यते । द्वितीये पाद उपमालङ्कारः ।

---

१ न्यथाभः २ गतेव

प्रजासु मातेव हितप्रवृत्ता गुरौ जने भक्तिरिवानुवृत्ता।
लक्ष्मीरिवाधीशकुले कृताभा[1] जगत्यभूदुत्तमदेवता या ॥ १६ ॥
कामं सदा स्त्रीचरितं तमिस्रं तथापि तां प्राप्य भृशं विरेजे।
न हीन्दुलेखामुपगम्य शुभ्रां नक्तं तथा सन्तमसत्वमेति ॥ १७ ॥
अतीन्द्रियेणा[2]त्मनि दुष्कुहो[3]ऽयं मया जनो योजयितुं न शक्यः।
इतीव सूक्ष्मां प्रकृतिं विहाय धर्मेण साक्षाद्विहिता स्वमूर्तिः ॥ १८ ॥
च्युतोऽथ कायात्तुषितात्त्रिलोकीमुद्योतयन्नुत्तमबोधिसत्त्वः।
विवेश तस्याः स्वयमेव कुक्षौ नन्दागुहायामिव नागराजः ॥ १९ ॥

---

( १६ ) प्रजास्विति। या प्रजासु जनेषु विषये। अपत्यतुल्येष्विति गम्यते। 'प्रजास्यात्सन्ततौ जन' इत्यमरः। हितप्रवृत्ता हिताय प्रवृत्ता। गुरौ जने श्वशुरादिगुरुजनविषये अनुवृत्ता अनुसृता भक्तिः प्रेमेव अधीशकुले राजगृहे 'गेहे देहे जनपदे सजातीयगणेऽन्वये। कुल' मिति नानार्थरत्नमाला। कृताभा जनितकान्तिः लक्ष्मीरिव उत्तमदेवता उत्कृष्टदेवतैवेत्यर्थः अभूत् आसीत्। देवतातुल्या बभूवेतिभावः पावनत्वाद्यतिशयो व्यज्यते।

( १७ ) काममिति। स्त्रीचरितं स्त्रीणां चरित्रं सदा काममत्यन्तं तामिस्रं तमस्तुल्यं मलिनमित्यर्थः। 'तमिस्रं तिमिरं तम' इत्यमरः। तथापि तां मायादेवीं प्राप्य भृशं अत्यन्तं विरेजे शुशुभे। हि यतः नक्तं रात्रिः इन्दुलेखामुपगम्य प्राप्य तथा यथेन्दुलेखाया अभावे तथा, सन्तमसत्वं गाढान्धकारविशिष्टत्वं न एति प्राप्नोति। अपितु भृशमुज्ज्वलीभवतीति भावः। 'विष्वक् ( तमः ) संतमसं' इत्यमरः। 'अवसमन्धेभ्यस्तमसः' इत्यच्। तदन्ताच्च प्रकृते अर्शआद्यजन्तत्वर्थीयः। वैधर्म्येण प्रतिवस्तूपमालङ्कारः। संतमसत्वाभावविराजनयोरविभिन्नयोः पौनरुक्त्यनिरासाय पार्थक्येन वचनात्।

( १८ ) अतीन्द्रियेणेति। अतीन्द्रियेण इन्द्रियाण्यतिक्रान्तेन इन्द्रियजन्यज्ञानाविषयेणेत्यर्थः। मया धर्मेण कर्त्रा दुष्कुहः दुष्टं कुहं शाठ्यं यस्य तथाभूतः। इदुदुपधस्येति षः। अयं पुरो दृश्यमानो जन आत्मनि स्वस्मिन्मयि धर्मे इत्यर्थः योजयितुं प्रवर्तयितुं न शक्यः। शठानामतीन्द्रियेषु विश्वासानुदयादिति भावः। इति हेतोरिव धर्मेण कर्त्रा सूक्ष्मामिन्द्रियागम्यां प्रकृतिं स्वरूपमिति यावत्। विहाय त्यक्त्वा या मायादेवी साक्षात्प्रत्यक्षगम्या स्वमूर्तिः कृता। उक्तहेतुकोत्प्रेक्षालङ्कारः। एतेन विशुद्धत्वातिशयो द्योत्यते।

( १९ ) अथ बुद्धस्य मायाया उदरे प्रवेशमाह। च्युत इति। अथ अनन्तरं उत्तमबोधिसत्त्वः उत्तमः बोधिः समाधिविशेषः सत्त्वं स्वभावो यस्य तथाभूतः

---

१ देवतामा २ अनिन्द्रियेण ३ दुःकुहोऽयं।

धृत्वा हिमाद्रिधवलं गुरुषड्विषाणं
दानाधिवासितमुखं द्विरदस्य रूपम् ।
शुद्धोदनस्य वसुधाधिपतेर्महिष्याः
कुक्षिं विवेश स जगद्व्यसनक्षयाय ॥ २० ॥

रक्षाविधानं प्रति लोकपाला लोकैकनाथस्य दिवोऽभिजग्मुः ।
सर्वत्र भान्तोऽपि हि चन्द्रपादा भजन्ति कैलासगिरौ विशेषम् २१

मायापि तं कुक्षिगतं दधाना विद्युद्विलासं जलदावलीव ।
दानाभिवर्षैः परितो जनानां दारिद्र्यतापं शमयांचकार ॥ २२ ॥

---

उत्कृष्टसमाधिशीलो बुद्ध इत्यर्थः । विशेषणमात्रेणावगमान्न पृथक्प्रयोगो विशेष्यस्य । तदाह वामनः 'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ ।' इति । 'बोधिः पुंसि समाधेश्च भेदे' इति मेदिनी । त्रिलोकीं स्वर्गादिलोकत्रयं उद्द्योतयन् प्रकाशयन् तमःशून्यं कुर्वन्निति भावः । हेतौ शता । तुषितात् भगवत्स्वरूपतया आनन्दविशिष्टात् । तुष्यतेः संपदादिक्विबन्तात्तारकादित्वादितच् । कायाच्छरीरात् च्युतो गलितः परित्यक्तदिव्य-शरीरः सन् इत्यर्थः । नन्दागुहायां नन्दासंज्ञायां गुहायां नागराजः शेष इव तस्या मायादेव्याः कुक्षौ उदरे विवेश प्रवेशं चकार गर्भो भूत्वा न्युवासेत्यर्थः । अविवक्षित-तकर्मत्वाद्विशेरकर्मत्वं ततश्च प्रवेशाधारतयाऽधिकरणत्वं कुक्षेः ।

( २० ) एतदेव विस्पष्टयति धृत्वेति । स बोधिसत्त्वः ( बुद्धः ) हिमाद्रि-धवलं हिमाचलवच्छ्वेतं गुरुषड्विषाणं गुरूणि षट् विषाणानि दन्ता यस्य तथाभूतं 'विषाणं तु शृङ्गे कोलेभदन्तयोः ।' इति हैमः । दानाधिवासितमुखं दानेन मदजलेन अधिवासितं सुरभीकृतं मुखं यस्य तथाभूतं द्विरदस्य गजस्य रूपं धृत्वा जगद्व्यसनक्षयाय जगतो दुःखस्य नाशार्थं वसुधाधिपतेः पृथ्वीपतेः शुद्धोदनस्य महिष्याः पट्टराज्या मायायाः कुक्षिं उदरं विवेश गर्भो भूत्वा प्राविशत् । कर्मणो विवक्षितत्वात्सकर्मकता विशतेः । वसन्ततिलकावृत्तम् । उक्ता वसन्ततिलका 'तभजा जगौ ग' इतिलक्षणात् ।

( २१ ) अथास्य परिपालनाय देवानां भूमावुपागममाह । रक्षेति । लोक-पाला इन्द्रादयो दिशां पतयः कर्तारः लोकैकनाथस्य लोकानां एकस्य स्वामिनः रक्षा-विधानं प्रति रक्षणक्रियां समाचरन्त इत्यर्थः। इत्थंभूताख्याने प्रतेः कर्मप्रवचनीयसंज्ञायां कर्मप्रवचनीययुक्त इति द्वितीया । दिवः स्वर्गात् अभिजग्मुः आगतवन्तः । ननु सर्वे-षामेव रक्षणे प्रवृत्तानां लोकपालानां कुत एतद्रक्षणार्थमेव भूमाववतरणमित्यत्राह सर्वत्रेति । चन्द्रपादाः चन्द्रकिरणाः 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः । सर्वत्र सर्वेषु प्रदेशेषु भान्तः प्रकाशमाना अपि कैलासगिरौ कैलासपर्वते विशेषं आधिक्यं भासनातिशयमित्यर्थः । बिभ्रति वहन्ति । भृञो धारणार्थाल्लट् । उपजातिर्वृत्तम् ।

( २२ ) गर्भाधिगमोत्तरं मायाया धर्मप्रवृत्तिमाचष्टे । मायेति । मायाऽपि कर्त्री जलदावली मेघपङ्क्तिः विद्युद्विलासं इव तं बुद्धं कुक्षिगतं कुक्षौ प्रविष्टं दधाना

सान्तः पुरजना देवी कदाचिदथ लुम्बिनीम्।
जगामानुमते राज्ञः संभूतोत्तमदोहदा ॥ २३ ॥
शाखामालम्बमानायाः[1] पुष्पभारावलम्बिनीम्।
देव्याः कुक्षिं विनिर्भिद्य बोधिसत्त्वो विनिर्ययौ ॥ २४ ॥

ततः प्रसन्नश्च बभूव पुष्यस्[2]तस्याश्च देव्या व्रतसंस्कृतायाः।
पार्श्वात्सुतो लोकहिताय जज्ञे निर्वेदनं चापि निरामयं च ॥ २५ ॥
प्रातः पयोदादिव तिग्मभानुः समुद्भवन्[3]सोऽपि च मातृकुक्षेः।
स्फुरन्मयूखैर्विहतान्धकारैश्चकार लोकं कनकावदातम् ॥ २६ ॥

धारयन्ती सती दानाभिवर्षैः दानानि द्रव्योत्सर्गा एव अभिवर्षाणि वृष्टयस्तैः कारणभूतैः जनानां लोकानां दारिद्र्यतापं दारिद्र्यरूपं तापं परितः सर्वतः शमयांचकार शान्तं कृतवती। उपमालङ्कारः। इन्द्रवज्रावृत्तम्।

(२३) अथ बुद्धस्य प्रादुर्भावं विवक्षुर्मायाया उपवनप्रवेशमाह। सेति। अथ कदाचित् सान्तःपुरजना अन्तःपुरवासिस्त्रीजनसहिता देवी माया कर्त्री संभूतोत्तमदोहदा संभूता जाता उत्तमा दोहदाः इच्छा यस्याः सा तथाभूता सती। इच्छासामान्यवचनोऽपि गर्भिणीच्छायां रूढो दोहदशब्दः। राज्ञः भूपस्य शुद्धोदनस्य अनुमते स्थितेति शेषः। राज्ञोऽनुमत्येति भावः। लुम्बिनीं नाम उपवनं जगाम। पथ्यावक्त्रं वृत्तम्।

(२४) शाखेति। तत्र च पुष्पभारावलम्बिनीं पुष्पाणां भारेण विनतां शाखां तरुशाखां अवलम्बमानाया आश्रयन्त्या देव्या मायायाः कुक्षिं उदरं विनिर्भिद्य विदार्य बोधिसत्त्वो बुद्धः विनिर्ययौ बहिराजगाम। मालिन्यभीरुः प्रसवद्वारमप्रविश्य कुक्षिं विदार्यैव प्रादुर्बभूवेति भावः। पथ्यावक्त्रं वृत्तम्।

(२५) तत इति। ततः पुष्यः कलिर्नाम युगविशेषः प्रसन्नः गृहीतप्रसादः क्षोभं परित्यज्य पुण्यपुरुषोदयाच्छान्त इत्यर्थः। बभूव। 'पुष्यः कलियुगे स्मृतः' इति मेदिनी। चकारो हेत्वर्थः। यस्मात् व्रतसंस्कृतायाः व्रतैर्नियमविशेषैः संस्कृतायाः शोधितायाः। 'संस्कृतः शोधित' इति जटाधरः। देव्या मायायाः पार्श्वात् कुक्षिपार्श्वात् सुतः पुत्रः लोकहिताय लोकानां हितं कर्तुं निर्वेदनं निर्गता वेदना पीडा यस्मात्तद्यथा तथा निरामयं निर्गत आमयो रोगो यस्मात्तद्यथा तथा च जज्ञे जातः। उपजातिवृत्तम्।

(२६) अस्यालौकिकत्वं पुनः प्राह। प्रातरिति। प्रातः प्रभाते पयोदात् मेघात् तिग्मभानुः तीक्ष्णकिरणः सूर्य इव सोऽपि बुद्धोऽपि मातृकुक्षेः मातुरुदरात् प्रादुर्भवन् प्रादुर्भवनक्रियायां वर्तमान एव विहतान्धकारैः विहतो निरस्तः अन्धकारो

१ आलम्ब्यमानायाः। २ पुण्यः। ३ समुद्भवेत्।

तं जातमात्रमथ काञ्चनयूपगौरं
प्रीतः सहस्रनयनः शनकैरगृह्णात्।
मन्दार[1]पुष्पनिकरैः सह तस्य मूर्ध्नि
खान्निर्मले च विनिपेततुरम्बुधारे ॥ २७ ॥

सुरप्रधानैः परिधार्यमाणो देहांशुजालैरनुरञ्जयंस्तान्।
संध्याभ्रजालोपरिसंनिविष्टं नवोडुराजं विजिगाय लक्ष्म्या ॥ २८ ॥

ऊरोर्यथौर्व[2]स्य पृथोश्च हस्तान्मान्धातुरिन्द्रप्रतिमस्य मूर्ध्नः।
कक्षीवतश्चैव भुजांस[3]देशात्तथाविधं तस्य बभूव जन्म ॥ २९ ॥

---

यैस्तथाभूतैर्मयूखैः किरणैः करणभूतैः लोकं समीपवर्तिनं जनं कनकावदातं सुवर्णवद्गौरं चकार। 'अवदातः सिते गौरे' इति मेदिनी। जनस्य किरणगतगौरत्वगुणग्रहणात्तद्गुणालङ्कारः। 'तद्गुणः स्वगुणत्यागात्परकीयगुणग्रहः।' इति लक्षणात्। अत्र प्रातःपयोदादिति समस्तं वा पदं, प्रातःकालिकान्मेघादित्यर्थः। उपजातिः।

(२७) तमिति। अथ जातमात्रं जातमेव जननसमकाल एवेत्यर्थः। काञ्चनयूपगौरं काञ्चनः सौवर्णो यो यूपो यज्ञस्तम्भस्तद्वद्गौरं तं बुद्धम्। 'यूपो यज्ञस्तम्भे' इत्युणादिकोशः (३।१९) प्रीतः आनन्दितः सहस्रनयन इन्द्रः कर्ता शनकैः शनैः। अव्ययसर्वनाम्नामित्यकच्। अगृह्णात् गृहीतवान्। च किंच तस्य बुद्धस्य मूर्ध्नि मस्तके खात् आकाशात्। 'अनन्तं सुरवर्त्म ख'मित्याकाशपर्यायेष्वमरः। मन्दारपुष्पनिकरैः मन्दारः कल्पवृक्षविशेषस्तस्य पुष्पाणां निकरैः समूहैः सह निर्मले विशुद्धे अम्बुधारे जलस्य धाराद्वयं विनिपेततुः पतिते। वसन्ततिलकावृत्तम्।

(२८) सुरेति। सुरप्रधानैः देवेषु मुख्यैः परिधार्यमाणः शिरसा परिगृह्यमाणः स इति शेषः तान् देवान् देहांशुजालैः देहस्य अंशूनां किरणानां जालैः समूहैः अनुरञ्जयन् रञ्जितान् कुर्वन् अनुरागवतो वा संपादयन् सन्ध्याभ्रजालोपरिसंनिविष्टं संध्यायाः संबन्धिनः अभ्रजालस्य मेघसमुदायस्य उपरि संनिविष्टं स्थितं नवोडुराजं नवं सद्यःसमुदितं उडूनां नक्षत्राणां राजानं चन्द्रमसं। 'राजाहःसखिभ्य' इति टच्। लक्ष्म्या शोभया विजिगाय पराजिग्ये। तत्सदृशीं शोभामुवाहेत्यर्थः निदर्शनालङ्कारः।

(२९) अथ कथं विपरीतमेतच्छ्रद्धेयतामापद्यतां श्रद्धावतां यदुच्यते कुक्षेरयं प्रादुर्भूत इत्यत्राह। ऊरोरिति। यथा और्वस्य नाम भृगुवंशजन्मनो मुनेः ऊरोः मातुरूरुप्रदेशात् च किंच यथा पृथोः वेननृपजन्मनो राज्ञः हस्तात् मुनिभिर्मथ्यमानात्पितुर्दक्षिणहस्तात् यथा वा इन्द्रप्रतिमस्य इन्द्रतुल्यस्य मान्धातुर्नाम मनुवंश्यस्य नृपस्य मूर्ध्नः पितुर्मस्तकात्। नेदं पुराणेषु वेतिहासादौ वा संदृष्टम्। तत्र हि मान्धाता

---

१ मान्दार। २ यथोर्वश्यं। ३ भुजांश।

क्रमेण गर्भादभिनिःसृतः सन् बभौ गतः खादिव योन्यजातः।
कल्पेष्वनेकेष्विव भावितात्मा यः संप्रजानन् सुषुवे न मूढः ॥३०॥

धैर्येण दीप्त्या च रराज बालः श्रिया रविर्भूमिमिवावतीर्णः।
तथातिदीप्तोऽपि निरीक्ष्यमाणो जहार चेतांसि यथा शशाङ्कः ३१

स हि स्वगात्रप्रभयोज्ज्वलन्त्या दीपप्रभां भास्करवन्मुमोष।
महार्हजाम्बूनदचारुवर्णो विद्योतयामास दिशश्च सर्वाः ॥ ३२ ॥

---

पितुः कुक्षेः समुत्पन्न इत्याख्यायत इति । यथा वा कक्षीवतो मुनिविशेषस्य भुजांसदेशात् भुजशिखरप्रदेशात् । अत्रांसपदं विशिष्टमात्रवाचकानामितिन्यायात् शिखरमात्रपरम्। कक्षावत इत्येवात्र युक्तं प्रतिभाति। एतन्नामैव हि मुनिरुपलभ्यते पुराणेषु न पुनः कक्षीवान्। श्रुतौ पुनः कक्षीवानपि संदृष्टः। तथाविधं तादृशमेव तस्य बुद्धस्य जन्म बभूव जातम् । कक्षीवद्वर्जमपरेषां कथा महाभारते वैष्णवपुराणादौ च दृश्यन्ते। विस्तरभिया तु नात्रोदाहर्तुं शक्यन्ते ।

( ३० ) क्रमेणेति । गर्भात् गर्भप्रदेशात् अभिनिःसृतः विनिर्गतः सन् योन्यजातः योन्या योनिमार्गेण अजातः अनुत्पन्नः स बुद्धः खात् आकाशादिव गतः आगत इत्यर्थः । उपसर्गाणां द्योतकत्वपक्षे विनाप्युपसर्गं सोपसर्गवदर्थप्रतीतिरिति गच्छतेरागमने वृत्तिः । क्रमेण बभौ दीप्तिं प्राप । यः अनेकेषु कल्पेषु ब्रह्मणो दिवसेषु भावितात्मा भावितः संजातसंस्कारः आत्मा मनो यस्य तथाभूतः अत एव संप्रजानन् ज्ञानसंपन्नः सन्नेव सुषुवे जज्ञे न पुनर्मूढो मोहयुक्तः सन् सुषुवे । सर्वेऽपि हि प्राणिनः प्राग्जानन्तोऽपि जायमाना मोहेनाव्रियन्ते । अनेककल्पसंस्कारवशात्तु नास्य ज्ञानं विलुप्तमिति भावः । 'कल्पो विकल्पे कल्पाद्रौ संवर्ते ब्रह्मवासरे ।' इति हैमः । षूङः प्राणिगर्भविमोचनार्थस्योत्पत्तिरूपार्थान्तरस्य वृत्ततयाऽकर्मकता तदाहुः 'धातोरर्थान्तरे वृत्ते धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ।' इति ।

( ३१ ) धैर्येणेति । बालः बुद्धः धैर्येण धीरभावेन दीप्त्या कान्त्या च भूमिं अवतीर्णं उपगतः रविः सूर्यः श्रिया कान्त्या इव रराज शुशुभे । किंच तथा यथा-रविस्तद्वत् अतिदीप्तः अतिशयेन प्रकाशमानोऽपि निरीक्ष्यमाणः दृश्यमानः लोकैरिति शेषः यथा शशाङ्कः चन्द्रः तथा चेतांसि मनांसि जहार आचकर्ष मनोहर आसीदित्यर्थः । महापुरुषत्वादिति भावः । उपजातिवृत्तम् ।

( ३२ ) पुनरप्यस्य प्रभाशालितामाचष्टे । स इति । स हि स किल उज्ज्वलन्त्या उज्ज्वलत्वं भजन्त्या उज्ज्वलयेत्यर्थः स्वगात्रप्रभया आत्मनः शरीरस्य प्रभया करणभूतया भास्करवत् यथा भास्करः सूर्यस्तथा दीपप्रभां दीपानां कान्तिं मुमोष

---

१ दीप्त्याच धैर्येण श्रिया रराज बालो ।

अनाकुलान्यब्जसमुद्गतानि[1] निष्पेषवन्त्यायतविक्रमाणि ।
ततः[2] स धीराणि पदानि सप्त सप्तर्षितारासदृशो जगाम ॥ ३३ ॥
बोधाय जातोऽस्मि जगद्धितार्थमन्त्या तथोत्पत्तिरियं ममेति ।
चतुर्दिशं सिंहगतिर्विलोक्य वाणीं स[3] भव्यार्थकरीमुवाच ॥ ३४ ॥

---

जहार अभिभूतवानित्यर्थः । च किंच महार्हजाम्बूनदचारुवर्णः महार्हस्य अत्युत्तमस्य जाम्बूनदस्य जम्ब्वां नाम इलावृतसरित्युत्पन्नस्य सुवर्णस्येव चारुः सुन्दरो वर्णो यस्य तथाभूतः सः सर्वा दिशः कर्मभूता विद्योतयामास प्रकाशयामास शरीरकान्त्येत्यर्थात् । उपजातिः ।

( ३३ ) अथास्य बाल्यमुपवर्णयति । ततः प्रभवानन्तरं सप्तर्षितारासदृशः सप्त च ते ऋषयश्च तेषां यास्ताराः तत्सदृशः तत्तुल्यः पूज्यस्तेजस्वी वा । तेजस्वित्वं पुनः प्रतिपादितमेव प्राक् सविशेषम् । सप्तर्षिरिति दिक्संख्ये संज्ञायामिति समासः । स बुद्धः अनाकुलानि ऋजूनि । 'ऋजावजिह्मप्रगुणौ व्यस्तेत्वप्रगुणाकुलौ ।' इत्यमरः अब्जसमुद्गतानि अब्जवत्कमलवत्समुद्गतानि उत्कर्षमारूढानि कमलतोऽप्युत्कृष्टानीत्यर्थः। निष्पेषवन्ति निष्पेषः निष्पेषणं विन्यासदार्ढ्याद्यत्र विन्यस्यते तस्य चूर्णीकरणं तदस्ति जनकतासंबन्धेन येषु तानि। आत्मनो विन्यासेन भुवं विचूर्णयन्तीत्यर्थः। आयतविक्रमाणि आयतो दीर्घः विक्रमो गतिर्येषां तानि । प्रतिन्यासमायतां भूमिं विलङ्घयन्तीत्यर्थः । धीराणि निर्भीकाणि धैर्याभिव्यञ्जकानीत्यर्थः । सप्त पदानि पदशब्दोऽत्र पदविन्यासवचनः। सप्तकृत्वः पदानां विन्यासेन परिच्छिन्नं प्रदेशं जगामेत्यर्थः । कालाध्वनोरत्यन्तसंयोग इति द्वितीया । सप्तेत्यविवक्षितम् । बालभावात्कतिचित्पदानि जगामेत्यर्थः । उपजातिः ।

( ३४ ) बोधायेती । सिंहगतिः सिंहस्येव गतिर्यस्य तथाभूतः स बुद्धः । 'गमनं हस्तिसिंहाभ्याम्' (उपमातव्यम् ) इति केशवमिश्राद्युक्तेः पुंगतेः सिंहसादृश्यं संप्रदायसिद्धम् । अहं बोधाय ज्ञानार्थं बोधं संपादयितुं कर्तुं जातोऽस्मि । तादर्थ्ये वा क्रियार्थोपपदस्येति वा चतुर्थी । तथा जगद्धितार्थं जगतः कल्याणार्थं मम इयं संप्रति जाता अन्त्या चरमा उत्पत्तिरवतार इति । चतुर्दिशं चतसृणां दिशानां समाहारं चतस्रोऽपि दिश इत्यर्थः । आवन्तो वेति क्लीबत्वविकल्पः। विलोक्य दृष्ट्वा । भव्यार्थकरीं भव्यरूपः कुशलरूपो योऽर्थस्तं कर्तुं शीलं यस्यास्तथाभूतां वाणीम् । करोतेस्ताच्छीलिकष्टः । टित्वान्ङीप् । उवाच उदीरयामास । दिक्चतुष्टयवर्तिनामशेषाणामपि प्राणिनामुपदेश्यत्वमवलोकयितुं चतुर्दिशावलोकनम् । बालस्याप्यस्य वाचा जगद्धितकर्तृत्वमन्वमीयतेति भावः । उपजातिः । गम्योत्प्रेक्षा ।

---

१ न्यज्ज, न्यब्जसमुन्नतानि । २ तथैव । ३ च ।

खात्प्रस्रुते चन्द्रमरीचिशुभ्रे द्वे वारिधारे शिशिरोष्णवीर्ये।
शरीरसौख्यार्थमनुत्तरस्य[1] निपेततुर्मूर्धनि तस्य सौम्ये ॥ ३५ ॥
श्रीमद्वितानं कनकोज्ज्वलाङ्गे वैदूर्यपादे[2] शयने शयानम्।
यं[3] गौरवात्काञ्चनपद्महस्ता यक्षाधिपाः संपरिवार्य तस्थुः ॥ ३६ ॥
मायातनूजस्य दिवौकसः के[4] तस्य[5] प्रभावात्प्रणतैः शिरोभिः।
अधारयन्[6] पाण्डरमातपत्रं बोधाय जेपुः परमाशिषश्च ॥ ३७ ॥
महोरगा धर्मविशेषतर्षाद्बुद्धेष्वतीतेषु कृताधिकाराः।
यमव्यजन्[7] भक्तिविशिष्टनेत्रा मन्दारपुष्पैः समवाकिरंश्च ॥ ३८ ॥

(३५) उक्तपूर्वमेवार्थं पुनराह। खादिति। अनुत्तरस्य नास्त्युत्तरो यस्मात्तथाभूतस्य सर्वश्रेष्ठस्य तस्य बुद्धस्य शरीरसौख्यार्थं सौम्ये सुन्दरे मूर्धनि मस्तके। 'सौम्यं तु सुन्दरे सोमदैवते' इत्यमरः। खात् आकाशात् प्रस्रुते गलिते चन्द्रमरीचिशुभ्रे चन्द्रस्य किरणवच्छुभ्रे शिशिरोष्णवीर्ये शिशिरं शीतलं शैत्यजनकमित्यर्थः उष्णं औष्ण्यजनकमित्यर्थः वीर्यं प्रभावो ययोस्ते द्वे वारिधारे जलधारे निपेततुः निपतिते। उपजातिवृत्तम्।

(३६) श्रीमदिति। श्रीमत् शोभासंपन्नं वितानं उल्लोचः 'चांदवा' इति महाराष्ट्र्यां ख्यातो यस्मिंस्तथाभूते कनकोज्ज्वलाङ्गे कनकेन सुवर्णेन उज्ज्वलं दीप्तिमत् अङ्गं आकारो यस्य तस्मिन् सुवर्णमय इत्यर्थः वैदूर्यपादे विदूरे पर्वतविशेषे भवस्य रत्नविशेषस्य पादा यस्य तस्मिन् शयने पर्यङ्के शयानं शयनं कुर्वन्तं यं बुद्धं गौरवात् महत्त्वात् हेतोः काञ्चनपद्महस्ताः काञ्चनं सुवर्णमयं कमलं हस्तेषु येषां तथाभूता यक्षाधिपाः यक्षपतयः संपरिवार्य आवृत्य तस्थुः स्थितवन्तः। सेवार्थमिति भावः। 'अस्त्री वितानमुल्लोच' इत्यमरः। शयनमिति शय्यतेऽस्मिन्नित्यधिकरणे ल्युट् कृत्यल्युटो बहुलमित्युक्तेः। लोकातिशयसंपदुपवर्णनादुदात्तमलङ्कारः।

(३७) मायेति। दिवौकसः दिवं स्वर्ग ओको वसतिस्थानं येषां ते देवाः कर्तारः। 'त्रिदिवेशा दिवौकस' इति देवपर्यायेष्वमरः मायातनूजस्य मायादेव्याः पुत्रस्य तस्य बुद्धस्य प्रभावात् प्रणतैः स्वयमेव नम्रतां प्राप्तैः। एतेन प्रभावातिशयो द्योत्यते। शिरोभिः मस्तकैरुपलक्षिताः सन्तः। उपलक्षणे तृतीया। के बुद्धस्य मूर्ध्नि। 'सुखशीर्षजलेषु कम्।' इति मेदिनी। पाण्डरं श्वेतं आतपत्रं छत्रं (तद्धि आतपात्त्रायते) अधारयन् धारयामासुः। बोधाय तस्य बोधप्राप्त्यर्थं च परमाशिषः उत्कृष्टानाशीर्वादान् जेपुः मनसा पठन्तिस्म। उपजातिः।

(३८) महोरगा इति। अतीतेषु इतः प्राचीनेषु चतुर्विंशतौ बुद्धेषु तज्जीवितकाल इत्यर्थः। कृताधिकाराः कृतः संपादितः अधिकारो धर्मविषये योग्यता यैस्त-

१ सौख्यमत्यन्तराय। २ वैडूर्य। ३ यद्गौरवात्। ४ खे। ५ यस्य। ६ आधारयन्। ७ अभ्यजन।

तथागतोत्पादगुणेन तुष्टाः शुद्धाधिवासाश्च विशुद्धसत्त्वाः ।
देवा ननन्दुर्विगतेऽपि रागे मग्नस्य दुःखे जगतो हितो यः ॥ ३९॥

यस्मिन्प्रसूते गिरिराजकीला वाताहता नौरिव भूश्चचाल ।
सचन्दना चोत्पलपत्रगर्भा पपात वृष्टिर्गगनादनभ्रात् ॥ ४० ॥

---

थाभूताः महोरगाः महान्तः सर्पाख्यदेवाः धर्मविशेषतर्षात् धर्मस्य विशेष आधिक्यं तत्र तर्षः अभिलाषातिशयः तस्माद्धेतोः भक्तिविशिष्टनेत्राः भक्त्या पूज्येष्वनुरागेण विशिष्टानि युक्तानि स्पष्टतया तदभिव्यञ्जकानीत्यर्थः नेत्राणि येषां तथाभूताः सन्तः यं बुद्धं अव्यजन् वीजयामासुः । विपूर्वादज गताविस्यतो लङ् । तस्य च वीजने वृत्तिः । च किंच मन्दारपुष्पैः मन्दारस्य नाम कल्पवृक्षस्य पुष्पैः करणभूतैः समवाकिरन् वर्षेण-व्याप्तं कृतवन्तः । एतदर्थक एव किरतिः प्रयुक्तस्तत्रभवता कविकुलगुरुणा 'अवा-किरन्बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः ।' इति । देवैरिव महोरगैरप्यसौ सेवित इति भावः । हेमचन्द्रस्तु सप्तैव बुद्धा इत्याह ।

( ३९ ) तथेति । तथागतोत्पादगुणेन तथागतस्य बुद्धस्य उत्पादगुणेन उत्प-त्तिरूपेण गुणेन तुष्टाः संतोषं प्राप्ताः शुद्धाधिवासाः शुद्धः अधिवासः संस्कारो येषां ते सुष्टुसंस्कृता इत्यर्थः अत एव च विशुद्धसत्त्वाः विशेषेण शुद्धं शुचित्वमापन्नं सत्त्वं मनो येषां ते तथाभूताः देवाः कर्तारो ननन्दुः आनन्दं प्रापुः । यः बुद्धो रागे सुखा-भिलाषे विगते विनष्टे सत्यपि । स्वस्य सुखाभिलाषाभावेऽपीत्यर्थः । 'सुखाभिज्ञस्य सुखानुस्मृतिपूर्वः सुखे तत्साधने वा यो गर्धस्तृष्णा लोभः स रागः ।' इति योगभा-ष्यम् । दुःखे मग्नस्य जगतः लोकस्य हितः सखा समुद्धृतौ सहायभूत इत्यर्थः । एतेन कारुण्यातिशयो व्यज्यते । शुद्धाधिवासत्वादिकं च देवानां धर्माधिकारमभिव्य-ञ्जयति । तथा यथा पूर्वे मुनयस्तद्वद्गतो मोक्षं प्राप्तस्तथागत इति केचित् परे तु तथा तादृशमनिर्वचनीयमित्यर्थः गतं ज्ञानं यस्येति व्याचक्षते । 'धर्मराजस्तथागतः' इति बुद्धपर्यायेष्वमरः । 'अधिवासो निवासे स्यात्संस्कारे धूपनादिभिः इति विश्व' । सत्त्वं द्रव्ये गुणे चित्ते' इति हैमः । उपजातिः ।

(४०) यस्मिन्निति । यस्मिन् बुद्धे प्रसूते जाते सतीत्यर्थः । गिरिराजकीला गिरिराजाः पर्वतश्रेष्ठा एव कीला अविचलनार्थं निखाताः स्थूणा यस्यां तथाभूता भूर्भूमिः वाताहता वातेनाहता नौरिव चचाल । यथा कीलबद्धापि नौर्वातेन समाहता चलत्येवं पर्वतकीलिताऽपि भूरेतस्य जननेन चलालेत्यर्थः । च किंच अनभ्रात् मेघ-शून्यात् गगनात् आकाशात् । 'अभ्रं मेघो वारिवाह' इत्यमरः । सचन्दना चन्द-नसहिता उत्पलपत्रगर्भा उत्पलानां कमलपुष्पाणां पत्राणि गर्भे यस्यास्तथा भूता च वृष्टिः पपात । उपजातिः ।

---

१ हिताय ।

वाता ववुः स्पर्शसुखा मनोज्ञा दिव्यानि वासांस्यवपातयन्तः ।
सूर्यः स एवाभ्यधिकं चकाशे[1] जज्वाल सौम्यार्चिरनीरितोऽग्निः ॥ ४१ ॥

प्रागुत्तरे चावसथ[2]प्रदेशे कूपः स्वयं प्रादुरभूत्सिताम्बुः ।
अन्तःपुराण्यागत[3]विस्मयानि यस्मिन् क्रियास्तीर्थ इव प्रचक्रुः ॥ ४२ ॥

धर्मार्थिभिर्भूतगणैश्च दिव्यैस्तद्दर्शनार्थं बलमाप[4] पूरः ।
कौतूहलेनैव च पादपैश्च प्रपूजयामास सगन्धपुष्पैः ॥ ४३ ॥

पुष्पद्रुमाः स्वं कुसुमं पुफुल्लुः[5] समीरणोद्भासितदिक् सुगन्धि ।
सुसंभ्रमद्भृङ्गवधूपगीतं भुजङ्गवृन्दापिहिताप्तवातम् ॥ ४४ ॥

---

( ४१ ) वाता इति । स्पर्शसुखाः स्पर्शेन सुखाः सुखकराः स्पर्शे सुखं येषां तथा भूता वा । सुखस्पर्शा इत्यर्थः । अत एव मनोज्ञाःमनोहरा वाता वायवः दिव्यानि दिवि-भवानि वासांसि वसनानि अवपातयन्तः अधः पातयन्तः ववुः वहन्ति स्म । वा गतिगन्धनयोरित्यतो लिट् । स एव पूर्व एव सूर्यः अभ्यधिकं यथा तथा चकाशे प्रकाशमापेदे । अनीरितः अप्रेरितः अनुद्दीपित इत्यर्थः अग्निः सौम्यार्चिः सौम्याः अर्चिषो ज्वाला यस्य तथाविधः सन् जज्वाल दिदीपे । 'अर्चिर्मयूखशिखयोर्नना ।' इति मेदिनी । इन्द्रवज्रावृत्तम् ।

( ४२ ) प्रागिति । च किंच प्रागुदत्तरे ऐशाने । प्राचश्चोत्तरायाश्च दिशोऽन्तरालं दिक् प्रागुत्तरा ऐशानी । दिङ्नामान्यन्तराल इति समासः । तद्भवे तु शब्दोऽयं लाक्षणिकः । आवसथप्रदेशे गृहप्रदशे । 'धिष्ण्यमावसथं स्थान' मिति गृहपर्या-येषु हैमः । सिताम्बुः सितं भागीरथीवच्छुभ्रं अम्बु जलं यस्य यथाभूतः कूपः स्वयं प्रादुरभूत् प्रकटो बभूव । यस्मिन् कूपे आगतविस्मयानि आगतो मनसि संजातो विस्मय आश्चर्यं येषां तथाभूतानि अन्तःपुराणि अन्तःपुरस्त्रियः तीर्थे इव क्रियाः स्नानाद्याः चक्रुः कृतवत्यः । इन्द्रवज्रावृत्तम् ।

( ४३ ) धर्मार्थिभिरिति । तद्दर्शनार्थं तस्य कूपस्य दर्शनार्थं यः पूरो जन समूहः । जलसमूहवाचिनोऽपि पूरशब्दस्य समूहसामान्यवाचित्वं लक्षणया । सः धर्मार्थिभिः धर्मेच्छुभिः दिव्यैःदिविभवैः स्वर्गनिवासिभिः च भूतगणैः प्राणिसमूहैः, करणभूतैः बलं बलवत्वं आप प्राप । तेषां योगेनाधिक्यं जगामेत्यर्थः । च किंच स पूरः कौतूहलेन कौतुकेन पादपैः पादपसंबन्धिभिः । तस्येदमित्यण् । सगन्धपुष्पैः गन्धसहितैः पुष्पैः । सुरभिभिः पुष्पैरित्यर्थः । प्रपूजयामास पूजितवान् । तं कूप-मित्यर्थात् । उपजातिः ।

( ४४ ) पुष्पद्रुमा इति पुष्पद्रुमाः । पुष्पप्रधाना वृक्षाः समीरणोद्भासितदिक् समीर-णेन स्वसम्पर्कवशात्सुरभिणा वातेन उद्भासिता उज्ज्वलीकृता दिशो येन तथाभूतं सुगन्धि

---

१ कथकाशे । २ वावसथ—,वावसय । ३ ण्याभृत । ४ जलमापुपूरे । ५ प्रफुल्लः ।

क्वचित्क्वणत्तूर्यमृदङ्गगीतैर्वीणामुकुन्दामुरजादिभिश्च[1]।
स्त्रीणां चलत्कुण्डलभूषितानां विराजितं चोभयपार्श्वतस्तत्॥४५॥
तवैष[2] निर्वाणपथप्रणेता सुतो भवेदित्यवकर्ण्य वाचम्।
अप्रत्ययं प्रत्ययिनः क्षितीन्द्रं प्रत्याययन्तो जगदुर्द्विजेन्द्राः॥४६॥
यद्राजशास्त्रं भृगुरङ्गिरा वा न चक्रतुर्वंशकरावृषी तौ।
तयोः सुतौ तौ च ससर्जतुस्तत्कालेन शुक्रश्च बृहस्पतिश्च॥४७॥

---

शोभनो गन्धो यस्य तथाविधम्। 'गन्धस्येदुत्पूतिसुसुरभिभ्य' इतीत्। सुसंभ्रमद्भृङ्गवधूपगीतं सुष्ठु यथातथा संभ्रमन्तीभिः संचरन्तीभिः भृङ्गवधूभिः भ्रमरस्त्रीभिः उपगीतं स्तुतं गुञ्जामिषेणेति भावः। भुजङ्गवृन्दापिहितात्तवातं भुजङ्गानां सौरभलुब्धानां सर्पाणां वृन्देन समूहेन अपिहितं अतिरोहितं प्रकाशं यथा तथा आत्तो गृहीतः सेवित इत्यर्थः वातो यस्य संबन्धी तत्। आत्त इत्यत्र उपसर्गादिति तः। स्वं स्वीयं पुष्पं जातावेकवचनं पुफुल्लुः विकासयामासुः। फुल्ल विकसन इत्यतोऽन्तर्भावितण्यर्थाल्लिट्। उपजातिः।

(४५) क्वचिदिति। तत् नगरं क्वचित् कुत्रचित्प्रदेशे उभयपार्श्वतः उभययोः पार्श्वयोः चलत्कुण्डलभूषितानां चलद्भिः तानप्रदानाद्यवसरे वदनस्य हिल्लोलिततया चञ्चलतां गच्छद्भिः कुण्डलैः एतदाख्यैः कर्णालङ्कारैः भूषितानां स्त्रीणां क्वणत्तूर्यमृदङ्गगीतैः तूर्याणि च मृदङ्गाश्च तूर्यमृदङ्गं क्वणत् शब्दं कुर्वत् तूर्यमृदङ्गं येषु तथाभूतैर्गीतैः च किंच वीणामुकुन्दामुरजादिभिः वीणाः प्रसिद्धा मुकुन्दा वाद्यविशेषाः मुरजा मृदङ्गाश्चादयो येषु तैर्वाद्यैः विराजितं आसीदिति शेषः।

(४६) तवेति। पद्यमेतत्क्वचिन्न दृश्यते। वस्तुतः पुनरावश्यकमिव प्रतिभाति। अन्यथा हि विच्छिद्यत इव संन्बध इति। अत एव चैकस्मिन्नेव पुस्तके संदृष्टमपि व्याख्यायते। प्रत्ययिनः प्रत्ययो ज्ञानमस्ति येषां ते ज्ञानिनो द्विजेन्द्रा ब्राह्मणश्रेष्ठाः कर्तारः तव भूपतेः एषः सुतः पुत्रः निर्वाणपथस्य मोक्षमार्गस्य प्रणेता निर्माता। ऋक्पूरब्धूःपथामानक्ष इत्यः। भवेदिति शेषः। इति वाचं द्विजानामित्यर्थात्। अवकर्ण्य श्रुत्वा अप्रत्ययं नास्ति प्रत्ययो विश्वासो यस्य तथाभूतं क्षितीन्द्रं राजानं शुद्धोदनं प्रत्याययन्तो विश्वासयन्तः। हेतौ शता। जगदुः वक्ष्यमाणप्रकारेण प्रोचुः। 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु।' इत्यमरः। उपजातिः।

(४७) पूर्वैरनुद्भावितस्यापि निर्वाणपथस्योद्भावने बुद्धस्य सामर्थ्यं दृष्टान्तैरुपपादयति। यदिति। तौ प्रसिद्धौ वंशकरौ गोत्रप्रवर्तकौ ऋषी भृगुः आङ्गिराः वाकारश्चार्थः। अङ्गिराश्चेत्यर्थः। यत् राजशास्त्रं राजनीतिशास्त्रं न चक्रतुः तत् राजशास्त्रं कालेन कियताऽपि समयेन तयोः भृगोराङ्गिरसश्च तौ प्रसिद्धौ सुतौ पुत्रौ शुक्रः च बृहस्प-

---

१ मुरुजा। २ पद्यमेतत्क्वचिन्नास्ति।

सारस्वतश्चापि जगाद नष्टं वेदं पुनर्यं ददृशुर्न पूर्वे।
व्यासस्तथैनं बहुधा चकार न यं वसिष्ठः कृतवानशक्तिः॥ ४८॥
वाल्मीकिनादश्च ससर्ज काव्यं जग्रन्थ यन्न च्यवनो महर्षिः।
चिकित्सितं यच्च चकार नात्रिः पश्चात्तदात्रेय ऋषिर्जगाद॥ ४९॥
यच्च द्विजत्वं कुशिको न लेभे तत्साधनं सूनुरवाप तस्य॥
वेलां समुद्रे सगरश्च दध्रे नेक्ष्वाकवो यां प्रथमे बबन्धुः॥ ५०॥

श्चेत्येतन्नामानौ ससर्जतुः उत्पादयामासतुः। अस्ति किल शुक्रेण च बृहस्पतिना च प्रणीतं राजनीतिशास्त्रम्। तत्राद्यमिदानीमुपलभ्यते अपरं पुनस्तत्र तत्रोदाहृतत्वात्संभाव्यते। ससर्जतुरिति षर्ज अर्जन इत्यस्य भौवादिकस्य धातूनामनेकार्थत्वान्निर्माणे वर्तमानस्य लिटि रूपं न तु सृजतेरिति बोध्यम्।

(४८) सारस्वत इति। सारस्वतः सरस्वत्याः पुत्रो मुनिभेदश्चापि नष्टं विलुप्तं वेदं पुनर्जगाद उवाच। यं वेदं पूर्वे प्राचीना न ददृशुः न दृष्टवन्तः। सारस्वतश्चायं नवमो व्यासः। तदाह विष्णुपुराणे 'सारस्वतश्च नवमे त्रिधामा दशमे स्मृतः' इति (३।३।१३) तथा यं अशक्तिः सामर्थ्यशून्यः वसिष्ठ एतन्नामा मुनिः बहुधा शाखाभेदाद्भिन्नप्रकारं, न चकार तं एनं वेदं व्यासः कृष्णद्वैपायनः। तत्रैव व्यासपदस्य मुख्यया वृत्त्या प्रयोगात्। बहुधा अनेकप्रकारं चकार कृतवान्। एतदप्युक्तं वैष्णवे 'आद्यो वेदश्चतुष्पादः शतसाहस्रसंमितः। *** ततोऽत्र मत्सुतो व्यासोऽष्टाविंशतितमेऽन्तरे। वेदमेकं चतुष्पादं चतुर्धा व्यभजत्प्रभुः।' (३।४।१) इति। एष च वृत्तान्तस्तत्रैव द्रष्टव्यः।

(४९) वाल्मीकीति। यत् काव्यं महर्षिश्च्यवनः न जग्रन्थ न विरचितवान् तत् काव्यं वाल्मीकिनादः वल्मीकजन्मनो मुनेः शब्दः ससर्ज निर्मितवान्। सृजतेर्लिट्। व्याधं कमपि तमसातीरे क्रौञ्चमिथुनमभिघ्नन्तमालोकमानस्य भगवतो वाल्मीकेर्वदनतो 'मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः। यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥' इति पद्यं काव्यमयं निरगच्छदित्यादि रामायणे द्रष्टव्यम्। च किंच यच्चिकित्सितं व्याधिप्रतिकारशास्त्रं, कितेर्व्याधिप्रतीकारे सन्नन्ताद्भावे क्तः। शास्त्रे च लक्षणा। अत्रिः नाम मुनिः न चकार। तत् चिकित्साशास्त्रं पश्चात् आत्रेयः अत्रिपुत्रः ऋषिः जगाद उक्तवान्। तदुक्तं भावप्रकाशे "मुनीन्द्र इन्द्रतः साङ्गमायुर्वेदमधीत्य सः। अभिनन्द्य तमाशीर्भिराजगाम पुनर्महीम्। अथात्रेयो मुनिश्रेष्ठो भगवान्करुणाकरः। स्वनाम्ना संहितां चक्रे नरचक्रानुकम्पया॥" इति। उपजातिः।

(५०) यदिति। च किंच कुशिक एतत्संज्ञो नृपः यत् द्विजत्वं न लेभे न प्राप तत् साधनं मोक्षप्राप्तौ साधनभूतं द्विजत्वं तस्य सूनुः पुत्रतुल्यः पौत्रो विश्वामित्रः।

१ पूर्वम्। २ वाल्मीकजातश्च। ३ राजन्, राजं। ४ प्रथमम्।

आचार्यकं योगविधौ द्विजानामप्राप्तमन्यैर्जनको जगाम।
ख्यातानि कर्माणि च यानि शौरेः शूरादयस्तेष्वबला बभूवुः॥५१॥
राज्ञामृषीणां च हितानि तानि कृतानि पुत्रैरकृतानि पूर्वैः।
तस्मात्प्रमाणं न वयो न कालः कश्चित्क्वचिच्छ्रैष्ठ्यमुपैति लोके ५२
एवं नृपः प्रत्ययितैर्द्विजैस्तैराश्वासितश्चाप्यभिनन्दितश्च॥
शङ्कामनिष्टां विजहौ मनस्तः प्रहर्षमेवाधिकमारुरोह॥ ५३॥

सूनुशब्दोऽत्र लक्षणया पौत्रवचनः। अवाप प्राप। क्षत्रियोऽपि विश्वामित्रस्तपोदग्धशरीरो ब्राह्मणत्वं प्रापेति पौराणिकी कथा। च किंच यां वेलां प्रथमे पूर्वे इक्ष्वाकव इक्ष्वाकुवंश्या राजानः न बबन्धुः रचयामासुः तामेव वेलां सागरकूलमर्यादां समुद्रे सगर इक्ष्वाकुवंश्यो भूपविशेषः दध्रे स्थापयामास निर्मितवानिति यावत्। धृङ् अविध्वंसने इति पाठमङ्गीकृत्य अविध्वंसनं स्थापनमिति कविकल्पद्रुमकामधेन्वां गोविन्दभट्टमतमुपन्यस्तम्। तदेवात्र प्रमाणम्। वेला च धक्केति महाराष्ट्र्यां ख्याता। प्रथम इति प्रथमचरमेत्यादिना जसि सर्वनामत्वं वैकल्पिकम्।

(५१) आचार्यकमिति। जनको नाम विदेहदेशाधिपो भूपः कर्ता अन्यैर्नृपैः अप्राप्तं योगविधौ चित्तवृत्तेर्निरोधक्रियाविषये। 'योगश्चित्तवृत्तिनिरोध' इति पतञ्जलिः। द्विजानां ब्राह्मणानां आचार्यकं आचार्यत्वमुपदेशकत्वमित्यर्थः। 'योपधाद्गुरूपोत्तमाद्वुञ्' इति भावे वुञ् (अकः)। जगाम प्राप। जनको हि ज्ञानोत्तरो योगविषये ब्राह्मणानामप्युपदेष्टाऽऽसीदिति। च अपि च यानि शौरेः शूरस्य लक्षणया वसुदेवस्यापत्यं पुमान् शौरिः श्रीकृष्णस्तस्य यानि कर्माणि ख्यातानि प्रसिद्धानि तेषु कर्मसु विषये शूरादयः वसुदेवप्रभृतयः अबला असमर्था बभूवुः। तानि कर्तुं न शेकुरित्यर्थः। 'शूरः स्याद्यादवे भटे' इति मेदिनी। शौरिरित्यत इञिताञ्। शूर इति वसुदेवपितुर्नाम लक्षणया त्वेतद्वसुदेवमाचष्टे। उपजातिः।

(५२) राज्ञामिति। राज्ञां ऋषीणां च पुत्रैः कर्तृभिः पूर्वैः प्राचीनै राजादिभिः अकृतानि तानि पुराणादिषु प्रसिद्धानि हितानि हितकराणि कार्याणि कृतानि। तस्मात् वयः कर्तुर्बाल्ययौवनाद्यवस्था न प्रमाणं कार्यकरणादौ न नियामिका। कालः अनुकूलतया प्रतिकूलतयाऽपि वाऽभिधीयमानः समयः न प्रमाणं न नियामकः। तेजीयसां कार्यानुष्ठाने वयो वा कालोऽपि वाऽकिंचित्कर एवेति भावः। यतः लोके कश्चित् अमुक इति वयआदिभिः कथयितुमशक्यः क्वचित् कस्मिंश्चिद्विषये श्रेष्ठ्यं श्रेष्ठत्वं उपैति प्राप्नोति। 'क्रियासिद्धिः सत्वे वसति महतां नोपकरण' इति कृतमस्यालौकिकतादिविषये संदेहेनेति भावः। उपजातिः।

(५३) एवमिति। एवं उक्तप्रकारेण प्रत्ययितैः संजातप्रत्ययैर्ज्ञानिभिरित्यर्थः

१ परिवृत्तमर्धद्वयमन्यत्र। २ कृतानि पूर्वैरकृतानि पुत्रैः।

प्रीतश्च तेभ्यो द्विजसत्तमेभ्यः सत्कारपूर्वं प्रददौ धनानि ॥
भूयादयं भूमिपतिर्यथोक्तो यायाज्जरामेत्य वनानि चेति ॥ ५४ ॥

अथो निमित्तैश्च तपोबलाच्च तज्जन्म जन्मान्तकरस्य बुद्ध्वा।
शाक्येश्वरस्यालयमाजगाम सद्धर्मतर्षादसितो महर्षिः ॥ ५५ ॥

तं ब्रह्मविद् ब्रह्मविदं[1] ज्वलन्तं ब्राह्म्या श्रिया चैव तपःश्रिया च।
राज्ञो गुरुर्गौरवसत्क्रियाभ्यां प्रवेशयामास नरेन्द्रसद्म ॥ ५६ ॥

---

तैः द्विजैर्ब्राह्मणैः आश्वासितः सान्त्वितः अभिनन्दितः प्रशंसितश्च नृपो राजा शुद्धोदनः अनिष्टां शङ्कां संशयं कथमयं निर्वाणोपदेष्टेत्यादिकं मनस्तः आत्मनो हृदयात् विजहौ त्यक्तवान्। किं च अधिकं प्रहर्षमानन्दमेव आरुरोह आरूढवान्प्राप्तवानित्यर्थः। उपजातिः।

( ५४ ) प्रीत इति। च किंच प्रीत आनन्दितः स राजा कर्ता अयं मे पुत्रः यथोक्तः ब्राह्मणवचनानुरूपः अलौकिक इति भावः। शास्त्रनिर्दिष्टलक्षणानुरूपो वा भूमिपतिः राजा भूयात् भवतात्। आशिषि लिङ्। किंच जरां वार्धकं एत्य प्राप्य वनानि वानप्रस्थकार्यानुष्ठानार्थमरण्यानि यायात् गम्यादिति उद्दिश्य तेभ्यो ब्राह्मणेभ्यः सत्कारपूर्वं संमानपूर्वकं यथा तथा धनानि द्रव्याणि। अवयवगतसंख्यापेक्षया बहुवचनम्। प्रददौ दत्तवान्। धनप्रदानफलस्य पुत्रगामित्वात्परस्मैपदम्। इन्द्रवज्रावृत्तम्।

( ५५ ) अथ द्विजोक्तमेवार्थमसितमुनिवचनेन द्रढयिष्यन्नसितागमनमाह। अथो इति। अथो धनप्रदानान्तरं महर्षिः महान् मुनिः असितो नाम निमित्तैः अग्न्यादीनां प्रदक्षिणार्चिष्ट्वादिरूपैर्लक्षणैः तपोबलात् तपःसामर्थ्येन च जन्मान्तकरस्य जन्मनः संसरणस्येति यावत् अन्तं कर्तुं शीलं यस्य तथाभूतस्य मोक्षप्रदस्य बुद्धस्येत्यर्थः। ताच्छीलिकः करोतेष्टः। तत् जन्म प्रादुर्भावं बुद्ध्वा ज्ञात्वा सद्धर्मतर्षात् सति शोभने धर्मे यस्तर्षो लोभस्तस्माद्धेतोः। बुद्धदर्शनरूपधर्मलोभादिति भावः। शाक्येश्वरस्य शाक्यसंज्ञकक्षत्रियाधिपतेः शुद्धोदनस्य आलयं गृहं आजगाम आगतवान्। उपजातिः।

( ५६ ) तमिति। ब्राह्म्या ब्रह्मणो वेदस्य ब्राह्मणस्य वा इयं ब्राह्मी तया श्रिया शोभया कान्त्येत्यर्थः। तस्येदमित्यणि नस्तद्धित इति टिलोपः। टिड्ढाणञिति ङीप्। वेदाध्ययनजन्येन ब्राह्मणत्वमूलकेन वा तेजसेत्यर्थः। तपःश्रिया तपसः संबन्धिन्या च कान्त्या तपोजन्येन तेजसेत्यर्थः। ज्वलन्तं दीप्यमानं ब्रह्मविदं ब्रह्मणः परमात्मनो वेत्तारं। विदेः क्विप् कर्तरि। तं असितं मुनिं ब्रह्मवित् वेदज्ञ परमात्मज्ञो वा राज्ञः शुद्धोदनस्य गुरुः पुरोहितः गौरवसत्क्रियाभ्यां गौरवेण सत्का-

---

१ ब्रह्मविदां।

स पार्थिवान्तःपुरसन्निकर्षं कुमारजन्मागतहर्षवेगम्।
विवेश धीरो बलसंज्ञयैव तपःप्रकर्षाच्च जराश्रयाच्च ॥ ५७ ॥
ततो नृपस्तं मुनिमासनस्थं पाद्यार्घ्यपूर्वं प्रतिपूज्य सम्यक् ॥
निमन्त्रयामास यथोपचारं पुरा वसिष्ठं स इवान्तिदेवः ॥ ५८ ॥
धन्योऽस्म्यनुग्राह्यमिदं कुलं मे यन्मां दिदृक्षुर्भगवानुपेतः ॥
आज्ञाप्यतां किं करवाणि सौम्य शिष्योऽस्मि विश्रम्भितुमर्हसीति।

---

रेण च। बहुमानयित्वा सत्कारं च कृत्वेति भावः। करणत्वारोपात्तृतीया। नरेन्द्रसद्म राज्ञो मन्दिरं प्रवेशयामास। 'वेदस्तत्त्वं (परमात्मा) तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः।' इत्यमरः।

(५७) स इति। तपःप्रकर्षात् तपस उत्कृष्टत्वात् च जराश्रयात् जराया आश्रयणात् वृद्धत्वाच्च धीरः प्रगल्भः सः असितः कुमारजन्मागतहर्षवेगं कुमारस्य पुत्रस्य जन्मना आगतः प्रादुर्भूतः हर्षस्य वेगः प्रसरः यस्मिंस्तं पार्थिवान्तःपुरसन्निकर्षं पार्थिवस्य पृथिव्या ईश्वरस्य राज्ञः शुद्धोदनस्य अन्तःपुरस्य सन्निकर्षं समीपप्रदेशं बलसंज्ञया बलस्य सैन्यस्य संज्ञया सूचनया पुरोवर्तिसैन्यकृतेन संकेतेनेत्यर्थः विवेश प्रविष्टवान्। कुत्र भूप इति जिज्ञासमानमेनं सैन्यं संज्ञया तत्स्थानं निरादिशदिति भावः। वस्तुतः किल प्रतिबन्धनीयः परेषां प्रवेशः सैन्येन तथापि तपःप्रकर्षादित्वाद्धीरोऽयं तेन संज्ञयान्तः प्रवेशित इत्यहो प्रभावस्तपसामिति भावः। 'अर्थस्य सूचनायां च हस्ताद्यैरपि योषिति।' इति संज्ञाशब्दार्थेषु मेदिनी।

(५८) तत इति। ततः प्रवेशानन्तरं पुरा पूर्वस्मिन्काले सः प्रासिद्धः अन्तिदेवः अतिदेवो वा भूपः वसिष्ठं नाम मुनिमिव नृपो राजा शुद्धोदन आसनस्थं आसनास्थितं आसनं प्रदाय तस्मिन्नुपवेशितामिति भावः। पाद्यार्घ्यपूर्वं पाद्यं पादोदकं अर्घ्यं गन्धादिमिश्रं पूजासाधनमुदकं च पूर्वं यस्मिन्कर्मणि तद्यथा तथा। पादार्घाभ्यामिति यत्। पाद्याद्युपचारपूर्वकमित्यर्थः। सम्यक् प्रतिपूज्य पूजयित्वा यथोपचारं उपचारमाचारमनतिक्रम्य। अनतिक्रमेऽव्ययीभावः। निमन्त्रयामास भाषितवानिति यावत्। 'ब्राह्मणं कुशलं पृच्छे' दित्याद्याचारमनुसृत्य कुशलप्रश्नपूर्वकं प्राहेतिभावः। यथोपचारमित्यस्य प्रतिपूज्येति दूरेण वा संबन्धः। उपजातिः।

(५९) नृपवचनमाह। धन्य इति। अहमित्यस्मिबलादध्याहियते अहं शुद्धोदनः धन्यः पुण्यावान् अस्मि। 'सुकृती पुण्यवान्धन्य' इत्यमरः। इदं मे कुलं गृहं वंशो वा अनुग्राह्यं अनुग्रहीतुं योग्यम्। ऋहलोरिति ण्यत्। अस्तीतिशेषः भवदनुग्रहपात्रं भवतानुगृहीतमिति यावत्। यत् यस्मात् भगवान् पूज्यो भवान् दिदृक्षुः द्रष्टुमिच्छुः सन् मां उपेतः स्वयमुपागतः। हे सौम्य शान्त मुने किं करवाणि कुर्यां भवदीयं

---

१ पाद्यार्घं। २ इवातिदेवः

एवं नृपेणोपनिमन्त्रितः सन् सर्वेण भावेन मुनिर्यथावत् ।
स विस्मयोत्फुल्लविशालदृष्टिर्गम्भीरधीराणि वचांस्युवाच ॥ ६० ॥
महात्मनि त्वय्युपपन्नमेतत्प्रियातिथौ त्यागिनि धर्मकामे ।
सत्त्वान्वयज्ञानवयोऽनुरूपा स्निग्धा यदेवं मयि धीस्त्वदीया॥६१॥
एतच्च तद्येन नृपर्षयस्ते धर्मेण सूक्ष्मेण धनान्युपार्ज्य ।
नित्यं त्यजन्तो विधिवद्बभूवुस्तपोभिराढ्या विभवैर्दरिद्राः ॥ ६२ ॥

कार्यमित्यर्थात्संबध्यते । तदाज्ञाप्यतां आदिश्यताम् । अहं शिष्यो भवत इति शेषः अस्मि । विश्रम्भितुं मयि विश्वसितुं अर्हसि योग्योऽसि । शिष्ये मयि विश्वस्याज्ञाप्यतां कर्तव्यमिति भावः । करवाणीति करोतेर्लोट् । 'विश्रम्भः केलिकलहे विश्वासे प्रणये वध' इति विश्वः । इतीत्यस्य निमन्त्रयामासेति पूर्वेण संबन्धः ।

( ६० ) एवमिति । एवमनेन प्रकारेण सर्वेण सकलेन भावेन प्रेम्णा विशिष्टेन । उपलक्षणे तृतीया । 'बुधा भावसमन्विता' इत्यादिषु किल भावपदं प्रेम्ण्यपि संदृष्टम् । नृपेण राज्ञा शुद्धोदनेन यथावत् यथोचितं उपनिमन्त्रितः सन् उक्तः सन् प्रार्थितः सन्निति यावत् । विस्मयोत्फुल्लविशालदृष्टिः विस्मयेन राज्ञ्यादरातिशयविलोकनजन्येन उत्फुल्ले विकसिते विशाले दृष्टी नेत्रे यस्य तथाभूतः । उत्फुल्लसंफुल्लयोरुपसंख्यानमितिवार्तिका-न्निष्ठातस्य लो निपात्यते । 'उत्फुल्लसंफुल्लव्याकोशे'ति विकसितपर्यायेष्वमरः । गम्भी-रधीराणि गम्भीराणि गाम्भीर्यवन्ति धीराणि पाण्डित्यवन्ति च वचांसि उवाच उक्तवान्- 'धीरः स्यात् त्रिषु पण्डित' इति मेदिनी । विस्मयः पुनरत्रबुद्धावतारसाक्षात्कारजन्यो वा बोध्यः । उपजातिवृत्तम् ।

( ६१ ) मुनेर्वचांस्याह । महात्मनीति । मयि मद्विषये सत्वान्वयज्ञानवयोऽनु-रूपा सत्त्वं साधुत्वं अन्वयो वंशः ज्ञानं शास्त्रादिजन्यो बोधः वयश्चैतेषामनुरूपा योग्या त्वदीया त्वत्संबन्धिनी तवेत्यर्थः धीः बुद्धिः एवमनेन प्रकारेण स्निग्धा स्नेहविशिष्टा प्रेमसंपन्नेत्यर्थः इति यत् तदेतत् त्यागिनि त्यागो दानमस्यास्ति करणीयत्वेन तथाविधे । अत इनिठनाविति इनिर्मत्वर्थीयः । 'त्यागो दाने च वर्जने' इति मेदिनी । प्रिया-तिथौ प्रिया अतिथयः प्राघुणिका यस्य तथाभूते । धर्मकामे धर्मे कामः अभिलाषो-यस्य तथाभूते त्वयि उपपन्नं युक्तियुक्तं संगतमेवेत्यर्थः । 'सिग्धं स्नेहयुते चिक्कणेऽपि स्यात्' इति मेदिनी ।

( ६२ ) राज्ञश्चरितमभिष्टौति । एतच्चेति । एतत्त्वयि लक्ष्यमाणमाचरितं तत् येन ते प्रसिद्धाः नृपर्षयो राजर्षयः ऋषिसमानचारित्रा राजान इत्यर्थः । ते कर्तारः सूक्ष्मेण अन्यैर्दुरवबोधेन। 'सूक्ष्मो धर्मो महाराज नास्य विद्मो वयं गतिम्।' इति महाभारतम् । धर्मेण धर्मानुसारेणेत्यर्थः । धनानि उपार्ज्य संपाद्य नित्यं विधिवत् यथाशास्त्रं

१ ते मतिः स्यात्। २ सूक्ष्माणि धनान्यपास्य।

प्रयोजनं यत्तु ममोपयाने तन्मे शृणु प्रीतिमुपेहि च त्वम् ।
दिव्या मया दिव्यपथे श्रुता वाग्बोधाय जातस्तनयस्तवेति ॥ ६३ ॥

श्रुत्वा वचस्तच्च मनश्च युक्त्वा ज्ञात्वा निमित्तैश्च ततोऽस्म्युपेतः ।
दिदृक्षया शाक्यकुलध्वजस्य शक्रध्वजस्येव समुच्छ्रितस्य ॥६४॥

इत्येतदेतद्वचनं[1] निशम्य प्रहर्षसंभ्रान्तगतिर्नरेन्द्रः ।
आदाय धात्र्यङ्कगतं कुमारं संदर्शयामास तपोधनाय ॥ ६५ ॥

---

त्यजन्तः दानं कुर्वन्तः विभवैः संपद्भिः दरिद्राः । धान्येन धनवानित्यादिवत्तृतीया । अपीति शेषः । तपोभिः आढ्याः धनिनः बभूवुः । तेषां च महात्मनां यच्चारित्रं तत्त्वयि लक्ष्यत इति भावः । 'इभ्य आढ्यो धनी'त्यमरः । 'धर्माः पुण्ययमन्याय'-इतिच । निदर्शनालङ्कारः । उपजातिः ।

(६३) आगमनप्रयोजनोपनिवेदनं प्रस्तौति । प्रयोजनमिति । यत्तु मम उपयाने आगमने प्रयोजनं कारणं तत् मे मत्सकाशात् । 'तेमेशब्दौ निपातौ' इति वामनोक्तेर्मेशब्दस्य निपातत्वेन निपातानामनेकार्थत्वात्पञ्चम्यर्थकतेति ध्येयम् । शृणु च त्वं प्रीतिं हर्षं उपेहि प्राप्नुहि । 'मुत्प्रीतिः प्रमदो हर्ष' इत्यमरः । यन्मागमनकारणं तच्छ्रवणेन नियतभावी ते हर्ष इति भावः । किं तत्कारणं तदाह । मया दिव्यपथे स्वर्गमार्गे तव तनयः बोधाय ज्ञानाय ज्ञानोत्पत्तये । मोक्षोपायोपदेशायेति भावः । जातः इति दिव्या दिवि भवा अशरीरिणीत्यर्थः वाक् श्रुता । उपजातिः ।

(६४) ततः किमित्याह । श्रुत्वेति । तत् दिव्यं वचः श्रुत्वा च मनः युक्त्वा समाधिलग्नं कृत्वा एकाग्रं कृत्वेत्यर्थः । युज समाधौ इत्यतः क्त्वा । च किंच निमित्तैः शकुनैः ज्ञात्वा यदुक्तं दिव्यया वाचा तत्तथैवेति स्थूणानिखननन्यायेन दृढं प्रतीत्य समुच्छ्रितस्य समुन्नतस्य शक्रध्वजस्य इन्द्रोत्सवसंबन्धिनो ध्वजस्येव शाक्यकुलध्वजस्य शाक्यानां भवद्वयानां राज्ञां कुले ध्वज इव तस्य । ते पुत्रस्य दिदृक्षया दर्शनेच्छया उपेतः प्राप्तः अस्मि । उपमालङ्कारः । उपजातिः ।

(६५) इतीति । इति एवंप्रकारं एतत् निर्दिष्टपूर्वं एतद्वचनं एतस्य असितस्य वचनं निशम्य श्रुत्वा प्रहर्षसंभ्रान्तगतिः प्रहर्षेण प्रकृष्टेनानन्देन संभ्रान्ता त्वरिता गतिर्गमनं यस्य तथाभूतः । 'संभ्रमस्त्वरा' इत्यमरः । नरेन्द्रः राजा धात्र्यङ्कगतं धात्र्या उपमातुः अङ्के उत्सङ्गे गतं विद्यमानं कुमारं पुत्रं आदाय तपोधनाय तप एव धनं यस्य तस्मै मुनये असिताय संदर्शयामास । उपजातिः ।

---

१ इत्येतदेवं ।

चक्राङ्कपादं स तथा महर्षिर्जालावनद्धाङ्गुलिपाणिपादम्।
सोर्णभ्रुवं वारणबस्तिकोशं सविस्मयं राजसुतं ददर्श ॥ ६६ ॥
धात्र्यङ्कसंविष्टमवेक्ष्य चैनं देव्यङ्कसंविष्टमिवाग्निसूनम्।
बभूव पक्ष्मान्तरवाञ्चिताश्रुर्निःश्वस्य चैवं त्रिदिवोन्मुखोऽभूत् ६७
दृष्ट्वाऽसितं त्वश्रुपरिप्लुताक्षं स्नेहात्सं पुत्रस्य नृपश्चकम्पे।
सगद्गदं बाष्पकषायकण्ठः पप्रच्छ च प्राञ्जलिरानताङ्गः ॥ ६८ ॥

(६६) चक्राङ्केति। स महर्षिः असितः चक्राङ्कपादं चक्रस्य अङ्कश्चिह्नं रेखात्मकं ययोस्तथाविधौ पादौ यस्य तादृशं जालावनद्धाङ्गुलिपाणिपादम् जालवत् अवनद्धाः परस्परसंलग्ना अङ्गुलयो यस्य तथाविधं पाणिपादं हस्तौ पादौ च यस्य तथाभूतं 'विभाति जालग्रथिताङ्गुलिः करः।' इति शकुन्तला। सोर्णभ्रुवं ऊर्णया भ्रूमध्यगतेन आवर्तेन सहितौ भ्रुवौ यस्य तथाभूतम्। 'ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः।' इत्यमरः। वारणबस्तिकोशं वारणस्य गजस्येव बस्तिकोशो वृषणो यस्य तथाभूतम्। 'मूत्राशयपुटो बस्तिः' इति रत्नमाला। तत्संबन्धी कोशो बस्तिकोशः। वस्तिरित्येव साधु 'वसेस्ति' रित्युक्तेः।। बवयोरभेदात्तुबस्तिः। तथास्थितं राजसुतं राज्ञः पुत्रं बुद्धं सविस्मयं यथा तथा ददर्श दृष्टवान्। महापुरुषलक्षणदर्शनेन श्रुतोक्तिप्रत्ययाच्च विस्मयोदयः। चक्राङ्कपादत्वादीनि किल महापुरुषलक्षणानीत्याचक्षते सामुद्रिकाः। उपजातिः।

(६७) धात्र्यङ्केति। देव्यङ्कसंविष्टं देव्याः पार्वत्या अङ्के संविष्टं शयितम्। 'शयनं स्वापः स्वप्नः संवेश इत्यपि' इत्यमरः। अग्निसूनुं कार्तिकेयमिव। '**पार्वतीनन्दनः** स्कन्दः सेनानी**रग्निभूर्गुहः**।' इति कार्तिकेयपर्यायेष्वमरः। श्रीपार्वतीपरमेश्वरयोर्वीर्यमग्निनोपात्तं ततश्चायं जात इति पौराणिकी कथाऽत्रानुसंधेया। धात्र्यङ्कसंविष्टं धात्र्या अङ्के संविष्टं शयितं एनं बुद्धं अवेक्ष्य दृष्ट्वा। महर्षिरिति पूर्वतोऽनुकृष्यते। महर्षिः कर्ता पक्ष्मान्तरवाञ्चिताश्रुः पक्ष्मान्तः अक्षिलोममध्ये अवाञ्चितानि अवगलितानि संलग्नानीति यावत्। अश्रूणि यस्य तथाभूतः सन् निःश्वस्य निःश्वासं दुःखजन्यमुन्मुच्य। चैवमित्यव्ययसमुदायः समुच्चये। त्रिदिवोन्मुखः स्वर्गसंमुखः आकाशे बद्धलक्ष्य इति यावत् अभूत्। तृतीयं दिवंलोकस्त्रिदिवं स्वर्गः। 'त्रिदिवत्रिदशालयाः।' इत्यमरः।

(६८) दृष्ट्वेति। सः नृपो राजा तु असितं मुनिं अश्रुपरिप्लुताक्षं अश्रुभिः परिप्लुते व्याप्ते इति यावत् अक्षिणी नेत्रे यस्य तथाभूतं दृष्ट्वा पुत्रस्य स्नेहात् पुत्रसंबन्धिना प्रेम्णा। हेतौ पञ्चमी। बाष्पकषायकण्ठः बाष्पैः अश्रुभिः कषायः विबद्धो

१ चक्राङ्कपार्णि। २ स्वर्णभ्रुवं। ३ पक्ष्मान्तारिवाञ्चिताश्रुः, पक्ष्मान्तविरंचिताश्रुः। ४ स्नेहात्त।

स्वल्पान्तरं यस्य वपुर्मुनेः स्याद्बह्वद्भुतं यस्य च जन्म दीप्तम्।
यस्योत्तमं भाविनमात्थ चार्थं तं प्रेक्ष्य कस्मात्तव धीर बाष्पः? ६९
अपि स्थिरायुर्भगवन्कुमारः कच्चिन्न शोकाय मम प्रसूतः?।
लब्धः कथंचित्सलिलाञ्जलिर्मे न खल्विमं पातुमुपैति कालः?॥ ७०॥
अप्यक्षयं मे यशसो निधानं कच्चिद्ध्रुवो मे कुलहस्तसारः?॥
अपि प्रयास्यामि सुखं परत्र? सुप्तोऽपि पुत्रो निमिषैकचक्षुः?॥७१॥

रुद्ध इति यावत् कण्ठो यस्य तथाभूतः। कण्ठविबन्धो हि कषायरसगुणः। गुणगुणिनोश्चाभेदोपचारात्कषायस्य निरोधवाचकतेति द्रष्टव्यम्। उक्तं हि चरके 'बध्नातीव च यः कण्ठं कषायः स विकास्यपि' इति सूत्रस्थाने। बाष्पनिरुद्धकण्ठ इत्यर्थः। आनताङ्गः आनतं नम्रतां प्राप्तं अङ्गं शरीरं यस्य तथाभूतः। कृतप्रणाम इत्यर्थः। प्राञ्जलिः बद्धाञ्जलिः सन् सगद्गदं दुःखवशादस्पष्टाक्षरं यथा तथा पप्रच्छ पृष्टवान्। उपजातिः।

(६९) प्रश्नमाह। हे धीर धैर्यसंपन्न! एतेन बाष्पप्रवृत्तेर्बलवद्धेतुकत्वमभिव्यज्यते। यस्य मे पुत्रस्य वपुः मुनेः अपेक्षया स्वल्पान्तरं स्वल्पं अत्यल्पं अन्तरं भेदो यत्र तथाभूतं यस्य च जन्म दीप्तं उज्ज्वलम् बह्वद्भुतं बहूनि अद्भुतानि आश्चर्याणि यत्र तथाभूतं यस्य च संबन्धिनं भाविनं भविष्यन्तं अर्थं विषयं कर्मभूतम्। 'अर्थो विषयार्थनयोः' इति मेदिनी। उत्तमं उत्कृष्टं आत्थ ब्रवीषि। ब्रुवो लट्। ब्रुवः पञ्चानामिति आहादेशे थलि च आहः स्थ इति थः। तं प्रेक्ष्य दृष्ट्वा तव बाष्पः अश्रु कथं प्रवर्तत इतिशेषः। यदि सर्वाङ्गीणमङ्गलः कुमारस्तत्कोहेतुस्तवाश्रुप्रवृत्ताविति भावः। इन्द्रवज्रावृत्तम्।

(७०) आशङ्कितमनिष्टं पृच्छति। अपीति। हे भगवन् पूज्य मुने कुमारः मम पुत्रः स्थिरायुः स्थिरं अचञ्चलं अविनाशीति यावत् आयुर्जीवनकालो यस्य तथाभूतो दीर्घायुरित्यर्थः। अपीति प्रश्ने। अयं मम शोकाय आत्मनो निधनेन शोकं जनयितुं न प्रसूतो नजातः कच्चिदिति प्रश्ने। मे मया। ते मे शब्दौ निपातौ (त्वयामयेत्यर्थे) इति वामनः। कथंचिन्महता क्लेशेन सलिलाञ्जलिः पुत्रेण पित्रेदेयो जलाञ्जलिः लब्धः प्राप्तः। पुत्रस्य प्राप्त्या तद्देयजलाञ्जलिप्राप्तिः। इमं अञ्जलिं पातुं प्राशितुं। पा पान इत्यतस्तुमुन्। कालः मृत्युः न उपैति प्राप्नोति खल्विति प्रश्ने। अपि मे पुत्रं निहत्य जलाञ्जलिं न विच्छेत्स्यति काल इति भावः। 'कालो मृत्यौ महाकाले।' इति मेदिनी। 'खलु स्याद्वाक्यभूषायां जिज्ञासायां च सान्त्वने।' इत्यपि तत्रैव। उपजातिः।

(७१) स्नेहातिशयात्पुनरेनमेवार्थं भङ्ग्यन्तरेण पृच्छति। मे यशसः कीर्तेः निधानं निधिः। कीर्तिजनकत्वात्तन्निधानभूतः कुमार इत्यर्थः। अक्षयं अविनाशि

१ वपुर्मुने २ लब्धा ३ सुप्तेऽपि पुत्रे ४ पुत्रोऽनिमिषैक

काच्चिन्न मे जातमफुल्लमेव कुलप्रसूनं परिशोषभागि ।
क्षिप्रं विभो ब्रूहि न मेऽस्ति शान्तिः स्नेहं सुते वेत्सि हि बान्धवनाम् ।
इत्यागतावेगमनिष्टबुद्ध्या बुद्ध्वा नरेन्द्रं स मुनिर्बभाषे ।
मा भून्मतिस्ते नृप काचिदन्या निःसंशयं तद्यदवोचमास्मि ॥७३॥
नास्यान्यथात्वं प्रति विक्रिया मे स्वां वञ्चनां तु प्रति विक्लवोऽस्मि ।
कालो हि मे यातुमयं च जातो जातिक्षयस्यासुलभस्य बोद्धा ॥७४॥

अपीति प्रश्ने । मे कुलहस्तसारः कुलस्य वंशस्य हस्तगतः सारः धनं तत्तुल्यः कुमार इत्यर्थः । 'सारं तु द्रविणन्याय्यवारिषु ।' इति हैमः । पुंस्त्वं तु लिङ्गमनियतमिति भाष्यकृद्वचनात् । ध्रुवः स्थिरः अविनाशी कच्चिदिति प्रश्ने । परत्र परलोके सुखं यथा तथा पुत्रनाशजन्यं दुःखमननुभूयेत्यर्थः । प्रयास्यामि गमिष्यामि । अपीति प्रश्ने । निमिषैकचक्षुः निमिषो निमीलनमेव एकं प्रधानं यस्मिंस्तथाभूतं चक्षुर्यस्य तथाविधः । केवलं निमीलितनेत्र इत्यर्थः । 'निमेषनिमिषौ कालप्रभेदेऽक्षिनिमीलने ।' इति मेदिनी । पुत्रः सुप्तः निद्रितः अपीति प्रश्ने । न मृतः कच्चिदिति भावः । भेदेऽप्यभेदरूपातिशयोक्तिः । उपजातिः ।

( ७२ ) पुनरपि तमेवार्थं पृच्छति । हे विभो प्रभो । एतेन ज्ञाने शक्तिर्द्योत्यते । जातं उत्पन्नं मे कुलप्रसूनं कुलरूपस्य तरोः प्रसूनं पुष्पभूतं अपत्यं कर्तृ । अफुल्लं अप्राप्तविकासं अप्रवृद्धमिति भावः परिशेषभागि परिशेषं नाशं भजते तथाभूतं विनाशगामीत्यर्थः न अपीति प्रश्ने । कच्चिन्नायमप्राप्तयौवन एव मरिष्यतीति भावः । 'शेषः सङ्कर्षणे वधे ।' इति मेदिनी । एतत् क्षिप्रं सत्वरं ब्रूहि । मे शान्तिः नास्ति । कुत इत्याह । हि यस्मात् बान्धवानां पित्रादीनां सुते पुत्रे पुत्रविषयकमित्यर्थः । स्नेहं प्रेम वेत्सि जानास्येव । तस्मात्प्रणयं मेऽवगत्य निवेदय परमार्थमिति भावः । एकदेशविवर्तिरूपकमलङ्कारः । उपजातिः ।

( ७३ ) इतीति । नरेन्द्रं राजानं इति एवंप्रकारेण अनिष्टबुद्ध्या पुत्रस्यानिष्टसंबन्धिना विचारेण आगतावेगं संजातसंभ्रमम् । 'आवेगः संभ्रमस्तत्र ।' इति साहित्यदर्पणम् । बुद्ध्वा ज्ञात्वा मुनिः बभाषे उक्तवान् । वचनमाह । मेति । हे नृप ते अन्या विपरीतेत्यर्थः काचित्कापि मतिः बुद्धिर्विचार इति यावत् । मा भूत् न भवतु । माङिलुङिति लुङ् । न माङ्योग इत्यडभावः । यत् अस्मि अहं अवोचं उक्तवान् तत् निःसंशयं संशयशून्यं सत्यमेवेत्यर्थः । अस्मीति तिङन्तप्रतिरूपकमव्ययमहमित्यर्थे । न मदुक्तमन्यथा संभाव्यतामिति भावः ।

( ७४ ) नेति । अस्य अन्यथात्वं प्रति अन्यथाभावविषये मे मम विक्रिया विकारः शोकलक्षणः न ।अयं अन्यं विनाशलक्षणं भावं गमिष्यतीति नाहं शोचामीत्यर्थः ।

१ कुलप्रवालं २ मुनीन्द्रं

विहाय राज्यं विषयेष्वनास्थस्तीव्रैः प्रयत्नैरधिगम्य तत्त्वम् ।
जगत्ययं मोहतमो निहन्तुं ज्वलिष्यति ज्ञानमयो हि सूर्यः ॥७५॥
दुःखार्णवाद्व्याधिविकीर्णफेनाज्जरातरङ्गान्मरणोग्रवेगात् ।
उत्तारयिष्यत्ययमुह्यमानमार्तं जगज्ज्ञानमहाप्लवेन ॥ ७६ ॥
प्रज्ञाम्बुवेगां स्थिरशीलवप्रां समाधिशीतां व्रतचक्रवाकाम् ।
अस्मात्परां[1] धर्मनदीं प्रवृत्तां तृष्णार्दितः पास्यति जीवलोकः ॥७७ ॥

---

किंतर्हि ? स्वां स्वीयां वञ्चनां प्रति प्रतारणां प्रति वञ्चितत्वविषय इत्यर्थः । विक्लवः व्याकुलः अस्मि । वञ्चितोऽस्मि दैवेनेत्यात्मानमेव शोचामीति भावः । वञ्चनामेवाह । हि यस्मात् कारणात् । अयं संप्रति विद्यमानः कालः मे यातुं गन्तुं परलोकमित्यर्थात् । कालयोगात् 'कालसमयवेलासु च'ति तुमुन् । च किंच असुलभस्य सुखेन लब्धुमशक्यस्य जातिक्षयस्य जन्मोच्छेदस्य मोक्षस्येत्यर्थः । बोद्धा ज्ञाता अयं ते पुत्रः जातः उत्पन्नः । तदेतेनात्मानमनुग्राहयितुमशक्नुवन्वञ्चनामेव प्राप्तोऽस्मीति भावः । 'जातिः स्त्री गोत्रजन्मनोः ।' इति मेदिनी ।

( ७५ ) बुद्धमुपवर्णयति । विहायेति । विषयेषु सुखभोगसाधनेषु वस्तुषु विषये अनास्थः निरपेक्षः । 'पिण्डेष्वनास्था खलु भौतिकेषु ।' इति कालिदासः । 'आस्थात्वालम्बनास्थानयत्नापेक्षासु योषिति ।' इति मेदिनी । अयं ते पुत्रः कर्ता । राज्यं विहाय त्यक्त्वा तीव्रैः आत्यन्तिकैः । 'तीव्रैकान्तनितान्तानी'त्यमरः । प्रयत्नैः तपआदिभिः तत्त्वं परमार्थं अधिगम्य ज्ञात्वा ज्ञानमयः ज्ञानात्मा सूर्यः सन् मोहतमः अज्ञानरूपमन्धकारं निहन्तुं उच्छेत्तुं जगति ज्वलिष्यति प्रकाशिष्यते । रूपकमलङ्कारः । उपजातिवृत्तम् ।

( ७६ ) पुनरपि स्तौति । अयं व्याधिविकीर्णफेनात् व्याधयो रोगा एव विकीर्णः फेनो यस्मिंतस्मात् । जरातरङ्गात् जरेत्युपलक्षणमवस्थान्तरस्य । जरैव तरङ्गा वीचयो यस्मिंस्तथाभूतात् । मरणोग्रवेगात् मरणमेव उग्रो भयंकरो वेगो यस्य तस्मात् दुःखार्णवात् दुःखसागरात् । उत्तारयिष्यतीत्यनेन संबन्धः । उह्यमानं वहनमनुप्राप्यमानं । वहेः कर्मणि लटः शानच् । दुःखार्णवेनेत्यर्थात् संबध्यते । अत एव च आर्तं पीडितं जगत् ज्ञानप्लवेन ज्ञानरूपेण उडुपेन ( नौकाविशेषेण ) करणभूतेन। 'उडुपं तु प्लव' इत्यमरः । उत्तारयिष्यति परं पारं गमयिष्यति । साङ्गं रूपकमलङ्कारः। उपजातिवृत्तम ।

( ७७ ) पुनरप्यस्य माहात्म्यमाह । प्रज्ञेति । तृष्णार्दितः । तृष्णया सुखाशया पिपासयेति गम्यते अर्दितः पीडितः जीवलोकः प्राणिसमूहः कर्ता । अस्मात् ते पुत्रात् प्रवृत्तां जातप्रवृत्तिं विनिर्गतामिति यावत् । प्रज्ञाम्बुवेगां प्रज्ञा ज्ञानमेव अम्बुवेगो जल-

---

१ अस्योत्तमां

दुःखार्दितेभ्यो विषयावृतेभ्यः संसारकान्तारपथस्थितेभ्यः ।
आख्यास्यति ह्येष विमोक्षमार्गं मार्गं[1] प्रनष्टेभ्य इवाध्वगेभ्यः ॥७८॥
विदह्यमानेषु[2] जनेषु[3] लोके रागाग्निनायं विषयेन्धनेन ।
आह्लादमाधास्यति[4] धर्मवृष्ट्या वृष्ट्या महामेघ इवातपान्ते ॥ ७९ ॥

वेगो यस्यां तथाभूतां स्थिरशीलवप्रां स्थिरं अचञ्चलं शीलं सद्वृत्तमेव वप्रं तटं यस्यास्तथाभूताम् । 'शीलं स्वभावे सद्वृत्ते' इति 'वप्रस्ताते पुमानस्त्री रेणुक्षेत्रे चये तटे ।' इति च मेदिनी । समाधिः ध्यानविशेष एव शीतो गुणो यस्यां तथाभूताम् । 'ध्यातृध्याने परित्यज्य क्रमाद्ध्येयैकगोचरम् । नीवातदीपवच्चित्तं समाधिरभिधीयते ।' इति श्रीविद्यारण्याचार्याः । व्रतचक्रवाकाम् व्रतानि चान्द्रायणादीन्येव चक्रवाकाः पक्षिविशेषा यस्यां तथाभूतां परां उत्कृष्टां धर्मनदीं धर्मरूपां नदीं पास्यति प्राशिष्यति । पिपासाकुल इव जलं अस्मात्प्रवृत्तं धर्ममासेविष्यत इत्यर्थः । रूपकमलङ्कारः । उपजातिः ।

( ७८ ) पुनरपि यदसौ करिष्यति तदाह । दुःखार्दितेभ्य इति । एषः ते पुत्रः कर्ता प्रनष्टेभ्यः प्रकृष्टं नष्टं नाशः मार्गस्य अनुपलम्भः प्रनष्टं तदस्ति येषां ते प्रनष्टास्तेभ्यः। मार्गमनधिगतवद्भ्य इत्यर्थः । नश्यतेर्नपुंसके भावेक्तः । ततोऽर्शआदित्वादच् । नशेः षान्तस्येति षत्वनिषेधः । अध्वगेभ्यः पान्थेभ्यः मार्गमिव दुःखार्दितेभ्यः दुःखैः आध्यात्मिकाधिभौतिकाधिदैविकरूपैस्त्रिभिः अर्दितेभ्यः पीडितेभ्यः । विषयावृतेभ्यः विषयैरावृतेभ्यः व्याप्तेभ्य इति यावत् । संसारकान्तारपथस्थितेभ्यः संसार एवकान्तारमरण्यं तस्य पन्थाः तस्मिन् स्थितेभ्यः प्राणिभ्यः । ऋक्पूरब्धूःपथामित्यः समासान्तः । विमोक्षमार्गं विमोक्षस्य विशेषेण अपुनरावृत्त्या मोक्षो विमोक्षस्तस्य मार्गः पन्था उपायस्तम् आख्यास्यति वक्ष्यति । हि निश्चयेन । 'नाशः पलायनेऽपि स्यान्निधनानुपलम्भयोः ।' इति मेदिनी इन्द्रवज्रा ।

( ७९ ) विदह्यमानेष्विति । एष इति कर्तृपदमनुवर्तते लोके जगति । 'लोकस्तु भुवने जने' इत्यमरः । जनेषु लोकेषु विषयेन्धनेन विषया इन्द्रियसुखदायिनो भावास्त एव इन्धनानि प्रज्वलनसाधनानि काष्ठानि यस्य तथाभूतेन रागाग्निना स्त्रीपुत्रादिप्रेमरूपेण वन्हिना विदह्यमाने सति विशेषेण तप्यमाने सतीत्यर्थः । महामेघः कर्ता आतपान्ते सूर्यप्रकाशस्यावसाने । यद्वा आसमन्तात्प्रसृतः तपो ग्रीष्म आतपः तस्य अन्ते अवसाने । 'उष्ण ऊष्मागमस्तप' इत्यमरः । वृष्ट्या जलवर्षेण इव धर्मवृष्ट्या धर्मरूपया वृष्ट्या करणभूतया आल्हादं आनन्दं आधास्यति करिष्यति जनयिष्यतीत्यर्थः । आङ्पूर्वो दधातिः करणे । यथा ग्रीष्मेण संतापितं जनं तदन्ते महान्मेघो जलमभिवृष्य समाल्हादयत्येवमयं रागाग्निना दह्यमानं जनं धर्ममि वृष्याल्हादयिष्यतीति भावः । बिम्बप्रतिबिम्बभावेनोपमालङ्कारः । उपजातिः ।

१ मार्गप्रनष्टेभ्य २ विदह्यमानाय ३ जनाय ४ प्रल्हाद

तृष्णार्गलं मोहतमःकपाटं द्वारं प्रजानामपयानहेतोः।
विपाटयिष्यत्ययमुत्तमेन सद्धर्मताडेन दुरासदेन॥ ८०॥
स्वैर्मोहपाशैः परिवेष्टितस्य दुःखाभिभूतस्य निराश्रयस्य।
लोकस्य संबुध्य च धर्मराजः करिष्यते बन्धनमोक्षमेषः॥ ८१॥
तन्मा कृथाः शोकमिमं प्रति त्वं स[1] सौम्य शोच्यो[2] हि[3] मनुष्यलोके।
मोहेन वा कामसुखैर्मदाद्वा यो नैष्ठिकं श्रोष्यति नास्य धर्मम्॥८२॥

( ८० ) तृष्णेति। अयं बुद्धः कर्ता प्रजानां लोकानां अपयानहेतोः निष्क्रमणार्थं तृष्णार्गलं तृष्णा आशैव अर्गला द्वारविष्कम्भः अडसर इति ख्यातो यत्र तथा भूतम्। 'कपाटमररं तुल्ये तद्विष्कम्भोऽर्गलं न ना।' इत्यमरः। मोहतमःकपाटं मोहोऽज्ञानमेव तमोऽन्धकारस्तदेव कपाटं द्वारपिधानफलकं यस्मिंतथाभूतं द्वारं संसारनिर्गमद्वारमिति भावः। तत्कर्मभूतं, दुरासदेन दुःखेनासत्तुं शक्येन दुर्लभेनासाधारणेनेत्यर्थः। सद्धर्मताडेन सद्धर्मो बुद्धनिर्मितो धर्मः स एव ताडः प्रहारस्तेन करणभूतेन विपाटयिष्यति विदारयिष्यति। ताड इति तडेर्घञि रूपम्। मोक्षद्वारं निरावरणं विधास्यतीत्यर्थः। 'स्वर्गद्वारकपाटपाटनपटुर्धर्मोऽडऽपि नोपार्जितः।' इति हरिः। रूपकमलङ्कारः। उपजातिः।

( ८१ ) स्वैरिति। च किंच एषः धर्मराजः धर्मस्य नवधर्मस्य राजा नियन्ता धर्मराजः। धर्मशास्तेत्यर्थः। संबुध्य स्वयं ज्ञानं संपाद्य स्वैः स्वीयैः मोहपाशैः मोहोऽज्ञानमेव पाशा रज्जवस्तैः परिवेष्टितस्य परित आवृतस्य सर्वतो बद्धस्येति यावत्। अत एव दुःखाभिभूतस्य दुःखेन विकलीकृतस्य निराश्रयस्य आधारशून्यस्य लोकस्य बन्धनमोक्षं बन्धनतः संसरणरूपान्मोक्षं विमुक्तिं करिष्यते। विमोक्षजन्यं फलमात्मन एव लभ्यमिति भावयन्निव जनान्विमोक्षयिष्यतीति द्योतनायात्मने पदम्। उपजातिवृत्तम्।

( ८२ ) उपसंहरति तदिति। हे सौम्य शान्तिशील राजन् तत् तस्मात्कारणात् इमंप्रति एतस्य पुत्रस्य विषये शोकं मा कृथाः न कुरु। माङि लुङिति लुङ्। हि यतः मनुष्यलोके मृत्युलोके यः कर्ता मोहेन अज्ञानेन हेतौ तृतीया कामसुखैः कामा विषयास्तेषां संबन्धिभिः तज्जन्यैरित्यर्थः सुखैः। हेतौ तृतीया। 'न जातु कामः कामानामुपभोगेन शाम्यति।' इत्यादौ कामपदस्य विषयार्थकत्वं द्रष्टव्यम्। मदात् अवष्टम्भाद्वा हेतोः अस्य बुद्धस्य एतत्कृतमित्यर्थः। नैष्ठिकं निष्ठा उत्कर्षः अभ्युदय इत्यर्थः अस्त्यस्मिन्प्राप्यतया नैष्ठिकः। अभ्युदयहेतुरित्यर्थः। तम्। यद्वा निष्ठा संसारस्यान्तो मोक्ष इत्यर्थः सोऽस्ति प्राप्यत्वेनास्य तथाभूतम्। मोक्षफलकमित्यर्थः। 'निष्ठोत्कर्षव्यवस्थयोः। क्लेशे निष्पत्तौ नाशेन्ते' इति हैमः। धर्मं न श्रोष्यति स एव शोच्यः शोचितुं योग्यो न त्वयमिति भावः।

१ तत्सौम्य शोच्ये हि २ शीवेग हि ३ ह

भ्रष्टस्य तस्माच्च गुणादतो मे ध्यानानि लब्ध्वाऽप्यकृतार्थतैव ।
धर्मस्य तस्याश्रवणादहं हि मन्ये विपत्तिं त्रिदिवेऽपि वासम् ॥८३॥
इति श्रुतार्थः ससुहृत्सदारस्त्यक्त्वा विषादं मुमुदे नरेन्द्रः ।
एवंविधोऽयं तनयो ममेति मेने स हि स्वामपि सारवत्ताम् ॥८४॥
आर्येण मार्गेण तु यास्यतीति चिन्ताविधेयं हृदयं चकार ।
न खल्वसौ न प्रियधर्मपक्षः संताननाशात्तु भयं ददर्श ॥८५॥

(८३) यद्येवं कुतस्ते बाष्पोद्गम इति चेन्नाहमेतं धर्मं प्राप्तुं प्रभवामीत्यत एवेत्युत्तरमभिद्योतयति । भ्रष्टस्येति । अतः यस्मादयं मोक्षसाधनं धर्ममुपदेक्ष्यति अहं च तावन्नभूलोके स्थातुं प्रभवामीत्यस्माद्धेतोः तस्मात् गुणात् प्रशस्तगुणवतो धर्मात् । गुणशब्दादर्शआद्यच् । ध्यानानि ध्येयवस्तुनि मनसः प्रत्ययैकतानत्वानि लब्ध्वा संपाद्यापि अकृतार्थतैव कृतार्थत्वस्याभाव एवास्ति । ननु भो ध्यानैस्ते स्वर्गप्राप्तिर्भविष्यति, तत्कुतस्तावदकृतार्थतेति चेत्तत्राह । हि यतः कारणात् अहं असितः कर्ता तस्य बुद्धोपदिष्टस्य धर्मस्य अश्रवणात् त्रिदिवे स्वर्गेऽपि वासं वसतिं विपत्तिं आपदमेव मन्ये । संपदादिभ्यः क्विन्नित्यतः परं क्तिन्नपीष्यत इत्युक्तेः क्तिन् । एतस्य धर्मस्याश्रवणाद् ध्यानलब्धः स्वर्गोऽपि मे दुःखायैव प्रकल्पेतेति भावः । 'धारणा तु क्वचिद् ध्येये चित्तस्य स्थिरबन्धनम् । ध्यानं तु विषये तस्मिन्नेकप्रत्ययसन्ततिः ॥' इति हेमचन्द्रः ॥

(८४) इतीति । इति एवं प्रकारेण श्रुतार्थः श्रुतः अर्थो विषयो येन तथाभूतः ससुहृत् सुहृद्भिर्मित्रैः सह वर्तमानः सदारः दारैर्भार्याभिः सह वर्तमानश्च नरेन्द्रो राजा विषादं खेदं त्यक्त्वा मुमुदे आनन्दं प्राप्तः । हि यस्मात् स राजा मम अयं तनयः पुत्र एवंविधः ईदृशः इति हेतोः । स्वां स्वीयां आत्मन इत्यर्थः सारवत्तां सारं पुत्ररूपमुत्कृष्टं वस्तु अस्त्यस्य तस्य भावस्ताम् । पुत्ररूपोत्कृष्टवस्तुविशिष्टत्वमित्यर्थः । मेने । 'न्याय्ये क्लीबं त्रिषु वरे' सारशब्दार्थेषु मेदिनी । उपजातिः ।

(८५) आर्येणेति । तु परंतु नरेन्द्र इतिकर्तृपदं पूर्वश्लोकतोऽनुवर्तते । तनय इति च । नरेन्द्रः कर्ता तनयः आत्मनः पुत्रः आर्येण श्रेष्ठेन मोक्षप्रापकेणेति यावत् । सर्वं वाक्यं सावधारणमिति न्यायात्तेनैवेत्यर्थः । मार्गेण यास्यति न तु संसारिणां मार्गं प्रजापालनादिकं विधास्यतीति हेतोः हृदयं आत्मनो मनः कर्मभूतं चिन्ताविधेयं चिन्ताया इष्टानवाप्तिमूलकस्य ध्यानविशेषस्य विधेयं वचने स्थितं अधीनमिति यावत् । चकार । तत्किमसौ धर्मद्वेष्टा? नेत्याह । असौ नरेन्द्रः प्रियधर्मपक्षः प्रियः धर्मस्य पक्षो यस्य तथाभूतः न इति न । 'संभाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ ।' इति वामनवचनान्नञ्द्वितयम् । तु तथापि संताननाशात् संतानस्य वंशस्य नाशात् विच्छेदात् भयं ददर्श अमन्यत । एकमात्रोऽयं मे पुत्रः, स चेत्सं-

१ कृतार्थतैव

अथ मुनिरसितो निवेद्य तत्त्वं सुतनियतं सुतविक्लवाय राज्ञे ।
सबहुमतमुदीक्ष्यमाणरूपः पवनपथेन यथागतं जगाम ॥ ८६ ॥
कृतमतिरनुजासुतं स दृष्ट्वा मुनिवचनश्रवणेऽपि तन्मतौ च ।
बहुविधमनुकम्पयाऽथ साधुः[1] प्रियसुतवद्विनियोजयाञ्चकार ॥ ८७
नरपतिरपि पुत्रजन्मतुष्टो विषमतमानि[2] विमुच्य बन्धनानि ।
कुलसदृशमचीकरद्यथावत्प्रियतनयस्[3]तनयस्य जातकर्म ॥ ८८ ॥

सारमार्गं नानुवर्तेत, वंशो मे विच्छिन्नः स्यादिति भीतिं जग्राहेति भावः । 'संतानः संततौ गोत्रे ( वंशे )' इति मेदिनी । उपजातिः ।

( ८६ ) अथेति । मुनिः मननशीलः असितः सुतविक्लवाय सुते सुतविषये विक्लवाय असितस्य सबाष्पं नयनमालोक्यानिष्टाशङ्कया पर्याकुलाय । राज्ञे शुद्धोदनाय सुतनियतं सुते पुत्रे नियतमवश्यम्भावि तत्त्वं परमार्थं निवेद्य कथयित्वा अथ अनन्तरम् । समानकर्तृकयोः पूर्वकल इति विहितस्य क्त्वाप्रत्ययस्यानन्तर्यवाचकत्वाभावात्तस्य च विवक्षणादथशब्दस्य पार्थक्येन प्रयोगः। सबहुमतं बहुमतेन बहुमानेन सहितं यथा तथा उदीक्ष्यमाणरूपः उदीक्ष्यमाणं नृपादिभिः उन्मुखीभूय विलोक्यमानं रूपमाकारो यस्य तथाभूतः यथागतं आगमनप्रकारमनतिक्रम्य आगमनतुल्यमेवेत्यर्थः। पवनपथेन वायुमार्गेण जगाम । पुष्पिताग्रावृत्तम् । अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा ।' इतिलक्षणात् । इदमेव चातःपरं सर्गान्तं यावद्वृत्तम् ।

( ८७ ) कृतेति । अथ मुनिवचनश्रवणे मुनेः असितस्य वचनस्य श्रवणे तन्मतौ तस्यासितस्य मतौ आशये च कृतमतिः व्यापारितबुद्धिः । असितस्य मुनेर्वचनं तदीयमभिप्रायं चावधारितवानित्यर्थः । सः साधुः शुद्धोदनः कर्ता बहुविधं अनेकप्रकारं यथातथा दृष्ट्वा विचार्येति यावत् । अनुकम्पया दयया अनुजासुतं कनीयस्याः सोदर्याः पुत्रं प्रियसुतवत्प्रियपुत्रवत् विनियोजयांचकार विनियोजितवान् । पुत्रस्येव तस्यापि पालनादौ प्रावर्ततेति भावः । यद्वा कृतमतिः कृता संपादिता मतिर्ज्ञानं येन तथाभूतो ज्ञानसंपन्न इत्यर्थः । स साधुः शुद्धोदनः मुनिवचनश्रवणे सति तन्मतौ तस्यानुमतौ च सत्यां अनुजासुतं अनुकम्पया बहुविधं यथातथा दृष्ट्वा प्रियसुतवद्विनियोजयाञ्चकारेति योजना । अत्र मुनिवचनश्रवणेऽपीति समासे गुणीभूतस्यापि मुनिशब्दस्य तच्छब्देन परामर्शः । तदाह वामनः ' सर्वनाम्नानुसन्धिर्वृत्तिच्छन्नस्य ।' ( ५।१।११ ) इति । वाचस्पतिमिश्रा अपि 'उपसर्जनस्यापि बुद्ध्या सन्निकृष्टस्य तदा परामर्श ' इति तत्त्वकौमुद्यामाहुः ।

( ८८ ) नरपतिरिति । अपीति किंचेत्यर्थे । अन्यथा हि पूर्वपद्ये नरपतेर्विभिन्न एव कर्ता प्रतीयेतेति। पुत्रजन्मतुष्टः पुत्रस्य जन्मना संतोषं प्राप्तः प्रियतनयः प्रियः तनयः

१ स २ विषयमतानि ३ प्रियतनयं

**दशसु परिणतेष्वहःसु चैवं प्रयतमनाः परया मुदा परीतः।**
**अकुरुत जपहोममङ्गलाद्याः परमतमाः स सुतस्य देवतेज्याः॥ ८९॥**
**अपि च शतसहस्रपूर्णसंख्याः स्थिरबलवत्तनयाः सहेमशृङ्गीः।**
**अनुपगतजराः पयस्विनीर्गाः स्वयमददात्सुतवृद्धये द्विजेभ्यः॥९०॥**

---

पुत्रो यस्य तथाभूतः नरपतिः शुद्धोदनः कर्ता विषमतमानि अतिशयेन विषमाणि कठिनानि बन्धनानि कर्मभूतानि विषमतमं बन्धनं प्रापितान्पुरुषानित्यर्थः। बन्धनपदं तत्प्राप्तेषु लाक्षणिकम्। विमुच्य मोचयित्वेत्यर्थः। अन्तर्भावितण्यर्थान्मुञ्चतोर्विपूर्वाल्ल्यप्। एष खल्वाचारो यत्पुत्रजन्मादौ बन्दिनो विमोच्यन्ते। कुलसदृशं आत्मनः कुलस्यानुरूपं यथा तथा यथावत् यथाशास्त्रं च तनयस्य पुत्रस्य बुद्धस्य जातकर्म जातमात्रे पुत्रे करणीयं संस्कारविशेषं अचीकरत् अकरोत्। चौरादिकस्यापरिसमाप्तत्वात्कृधातुरपि तत्र विनिविष्टः प्रतीयते। प्रयुज्यते च विद्वद्भिरत एव 'रामो राज्यमचीकरत्' इत्यादि। ये तु नैतद्विषहन्ते तैः पुरोहितेन कारयामासेत्यास्थेयम्। कृञः स्वार्थेणिजन्तात्प्रयोजकणिजन्ताद्वा लुङ्। 'प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते। मन्त्रवत्प्राशनं चास्य हिरण्यमधुसर्पिषाम्।' इति हारीतः। नाभिवर्धनं नालच्छेदः॥

(८९) दशस्विति। च किंच एवमनेन प्रकारेण दशसु कुमारजन्मनः प्रभृति दशसंख्येषु **अहःसु** दिवसेषु **परिणतेषु** अवसानं प्राप्तेष्वतिक्रान्तेषु सत्सु। जननाशौचव्यपगमानन्तरमिति भावः। दशस्विति द्वादशोलक्षणम्। क्षत्रियत्वाद्राज्ञः क्षत्रियाणां च द्वादशाहमन्तरा जननाशौचस्यापायाभावात्। तदाह पराशरः। 'जातौ विप्रो दशाहेन द्वादशाहेन भूमिपः। वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति॥' इति। विद्यादिविशिष्टतयाऽशौचस्य संकोचाद्वास्यदशस्वहःस्वतीतेष्वित्युक्तिः। तदाह देवलः। 'एतैर्युक्तस्य राज्ञस्तु द्वादशैकादशा दश (दिवसानशौचमिष्यते)' इति। अघसंकोचस्य कलौ प्रतिषेधात्तूपलक्षणत्वमुक्तमस्माभिः। **प्रयतमनाः** प्रयतं पवित्रं मनो यस्य तथाभूतः। 'पवित्रः प्रयतः पूतः' इत्यमरः। परया श्रेष्ठया आत्यंतिक्येत्यर्थः मुदा हर्षेण परीतो व्याप्तो युक्त इत्यर्थः। 'परः श्रेष्ठ' इति मेदिनी। 'मुत्प्रीतिः प्रमदो हर्ष' इत्यमरः। स राजा सुतस्य संबन्धिनीः जपहोममङ्गलाद्याः जपो होमो मङ्गलं स्वस्तिवाचनं चेत्येतानि आदौ यासु ताः परमतमा श्रेष्ठतमाः देवतेज्याः देवतानां इज्या आराधनानि अकुरुत कृतवान्। इज्येति व्रजयजोर्भाव इति क्यप्। व्रश्चभ्रस्जेत्यादिना संप्रसारणं च।

(९०) अपि चेति। अपि च किंच। स इत्यनुकृष्यते। स राजा सुतवृद्धये पुत्रस्य वृद्ध्यर्थं स्वयं द्विजेभ्यः ब्राह्मणेभ्यः अनुपगतजराः न उपगता प्राप्ता जरा यास्तथाभूताः स्थिरबलवत्तनयाः स्थिरमनश्वरं बलमस्ति येषु तथाभूतास्तनया वत्सा यासां तथाभूताः। सहेमशृङ्गीः हेम्न दानार्थमाबद्धेन सुवर्णेन सह वर्तमानानि

---

१ परिमितेष्व

**बहुविधविषयास्ततो यतात्मा स्वहृदयतोषकरीः क्रिया विधाय ।**
**गुणवति दिवसे शुभे मुहूर्ते मतिमकरोन्मुदितः पुरप्रवेशे ॥ ९१ ॥**

**द्विरदरदमयीमथो महार्हां सितसितपुष्पभृतं[1] मणिप्रदीपाम् ।**
**अभजत शिबिकां शिवाय देवी तनयवती प्रणिपत्य देवताभ्यः ९२**

शृङ्गाणि यासां तथाभूताः । आवश्यकं हि दानावसरे गवां स्वर्णशृङ्गीत्वादि । तथा ह्याहुः ' सुवर्णशृङ्गीं यः कृत्वा रौप्यमुक्ताखुरां तथा ।' इत्यादि । शतसहस्रपूर्णसंख्याः शतेन सहस्रैः पूर्णा संख्या यासां ताः । लक्षपरिमिता इत्यर्थः । पयस्विनीः अतिशयितं पयोऽस्त्यासां ताः । अतिशयाने अस्मायेत्यादिना मत्वर्थीयो विनिः । तथा ह्युक्तमभियुक्तैः 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादय ' इति । गाः अददात् दत्तवान् । डुदाञ् दान इत्यतो लङ् ।

(९१) बह्विति । ततः गोदानातन्तरं यतात्मा निगृहीतमनाः स राजा कर्ता । एतेन हृदयतोषस्य नाधर्मजन्यत्वमिति व्यज्यते । बहुविधविषयाः बहुविधा नैकप्रकारा विषया यासां तथाभूताः स्वहृदयतोषकरीः आत्मनो हृदयस्य संतोषजनिकाः क्रियाः कर्माणि विधाय कृत्वा मुदितः आनान्दितः सन् गुणवति ज्योतिःशास्त्रोक्तैः प्रशस्तैर्गुणैर्युक्ते दिवसे तत्र च शुभे शोभने मुहूर्ते दिनस्य पञ्चदशे भागे तदुक्तं रत्नमालायाम् ' दिनस्य यः पञ्चदशो मुहूर्तो रात्रेस्तथा तद्धि मुहूर्तमानम् ।' इति । पुरप्रवेशे नगरप्रवशविषये मतिं अकारोत् । नगरप्रवेशः करणीय इति मनसि चकारेत्यर्थः । पुराद्बहिरुद्यान एव प्रसूता राज्ञीति तदानीं नगरप्रवेशो विनिश्चितः । स्वहृदयतोषकरीणां च क्रियाणामनुष्ठानं धर्मत्वाद्वाऽऽत्मनस्तुष्टेर्बोध्यम् । तदुक्तं धर्मप्रमाणेषु ' आत्मनस्तुष्टिरेव च ।' इति ।

(९२) द्विरदेति । अथो मतिकरणानन्तरम् । ओदन्तो निपातोऽयमथार्थः । तनयवती तनययुक्ता देवी राज्ञी माया शिवाय कल्याणार्थं ' शिवं भद्रं कल्याण ' मित्यमरः । देवताभ्यः देवता अनुकूलयितुं । क्रियार्थोपपदस्य च कर्मणि स्थानिन इति चतुर्थी । अन्यथा तु द्वितीया स्यात् । प्राणिपत्य नमस्कृत्य । द्विरदरदमयीं द्विरदानां गजानां रदा दन्तास्तेषां विकारं हस्तिदन्तानिर्मितामित्यर्थः । विकारे मयट् । टित्त्वान् ङीप् । महार्हां महामूल्याम् इति कल्पद्रुमः महायोग्यामिति तु साधु । सितसितपुष्पभृतम् सितप्रकाराणि सितसितानि श्वेतानीत्यर्थः यानि पुष्पाणि तानि बिभर्ति धत्ते तथाभूताम् । 'प्रकारे गुणवचनस्ये' ति द्विर्भावः । बिभर्तेः क्विप् कर्तरि । मणिप्रदीपां मणीनां रत्नानां प्रदीपा यस्यां तथाभूताम् । दीप्ररत्नमयदीपयुक्तामित्यर्थः । शिबिकां याप्ययानापरपर्यायां पालखीति महाराष्ट्र्यां ख्यातां अभजत असेवत । आरुरोहेत्यर्थः ॥

१ भृतां ।

पुरमथ पुरतः प्रवेश्य पत्नीं स्थविरजनानुगतामपत्यनाथाम्।
नृपतिरपि जगाम पौरसंघैर्दिवममरैर्मघवानिवार्च्यमानः ॥ ९३ ॥
भवनमथ विगाह्य शाक्यराजो भव इव षण्मुखजन्मना प्रतीतः।
इदमिदमिति हर्षफुल्लवक्त्रो बहुविधपुष्टियशस्करं व्यधत्त ॥ ९४ ॥
इति नरपतिपुत्रजन्मवृद्ध्या सजनपदं कपिलाह्वयं पुरं तत्।
धनदपुरमिवाप्सरोऽवकीर्णं मुदितमभून्नलकूवरप्रसूतौ ॥ ९५ ॥

इति श्रीबुद्धचरिते महाकाव्ये भगवत्प्रसूतिर्नाम प्रथमः सर्गः।

---

(९३) पुरमिति। अथ शिबिकारोहणानन्तरं स्थविरजनानुगतां स्थविरैर्वृद्धैर्जनैरनुगतां अनुसृताम्, पश्चाद्गमनेन संभाव्यमानामित्यर्थः। अपत्यनाथाम् अपत्ययुक्ताम्। अत्र नाथपदमर्शआद्यजन्तं सनाथार्थे बोध्यम्। पत्नीं भार्यां मायादेवीं पुरत आदौ पुरं नगरं प्रवेश्य। विशेर्ण्यन्तात्क्त्वो ल्यप्। पुरमिति रेफान्तस्य स्त्रीलिङ्गस्यादन्तस्य वा क्लीबस्य रूपम्। अमरैर्देवैः अर्च्यमानः पूज्यमानः मघवानिन्द्रः दिवं स्वर्गमिव पौरसंघैः पुरवासिनां लोकानां समूहैः अर्च्यमानो नरपतिरपि जगाम पुरमित्यर्थात्संबध्यते। उपमालङ्कारः। वैभवातिशयो व्यज्यते।

(९४) भवनमिति। अथ पुरप्रवेशानन्तरं षण्मुखजन्मना षट् मुखानि यस्य तस्य कार्तिकेयस्य नामात्मनः पुत्रस्य जन्मना प्रतीतः हृष्टो भवः श्रीशङ्कर इव विद्यमानः पुत्रजन्मना हृष्ट इत्यर्थः। 'प्रतीतः सादरे ज्ञाते हृष्टप्रख्यातयोस्त्रिषु' इति मेदिनी। शाक्यराजः शुद्धोदनः भवनं विगाह्य प्रविश्य। गाहूविलोडन इत्यतो विपूर्वात् क्त्वो ल्यप्। हर्षफुल्लवक्त्रः हर्षेण आनन्देन फुल्लं विकसितं वक्त्रं यस्य तथाभूतः सन् इदमिदमिति इदं कार्यमिदं कार्यमिति कृत्वा बहुविधपुष्टियशस्करं बहुविधं पुष्टियशसोः करं कारकं कर्म व्यधत्त चकार। पुरा किलात्मनि पतितं श्रीशिववीर्यं भूमिरग्नावग्निश्च शरवणे तत्त्याज। तत्र चाग्निसमतेजाः कुमारो जज्ञे। देवास्तु तं दृष्ट्वा स्तनपानकर्मणि षट् कृत्तिका नियोजयामासुः। तासां च स्तनं प्राश्नतोऽस्य षण्मुखानि प्रादुरभूवन्निति पौराणिकी कथाऽत्रानुसंधेया।

(९५) इतीति। इति एवंप्रकारेण नरपतिपुत्रजन्मवृद्ध्या नरपतेः पुत्रस्य जन्मैव वृद्धिः अभ्युदयस्तया हेतुभूतया सजनपदं जनपदेन देशेन राष्ट्रेण जानपदैरित्यर्थः। सह तत् कपिलाह्वयं कपिलनामकं पुरं नगरं, नागरिका इत्यर्थः। नलकूवरप्रसूतौ नलकूवरः कुबेरपुत्रस्तस्य प्रसूतौ जन्मनि। 'पुत्रस्तु नलकूवर' इत्यमरः। अप्सरोऽवकीर्णं अप्सरोभिः स्ववेश्याभिः अवकीर्णं व्याप्तं धनदपुरं कुबेरनगरं अलकाख्यमिव। 'मनुष्यधर्मा धनद' इति कुबेरपर्यायेष्वमरः। मुदितं हृष्टं अभूत् 'कालान्तरे चाभ्युदये' इति वृद्धिशब्दार्थेषु मेदिनी। उपमालङ्कारः।

इति श्रीमत्पण्डितराजवंशावतंसवैयाकरणशेखरश्रीमत्कान्ताचार्यसूरिणां छात्रेण
श्रीमत्सदाशिवबुधसूनुना राशिवडेकरेण श्रीअप्पाशर्मविद्यावाचस्पति-
विद्यालङ्कारमहोपदेशकेन विनिर्मितायां बालबोधिन्याख्यायां
बुद्धचरितव्याख्यायामादिमः सर्गः ॥

॥ श्रीसदाशिवार्पणमस्तु ॥

॥श्रीशिवः शरणम्॥

# बुद्धचरिते द्वितीयः सर्गः।

आ जन्मनो जन्मजरान्तकस्य तस्यात्मजस्यात्मजितः स राजा।
अहन्यहन्यर्थगजाश्वमिश्रैर्[1]वृद्धिं ययौ सिन्धुरिवाम्बुवेगैः॥ १॥
धनस्य रत्नस्य च तस्य तस्य कृताकृ[2]तस्यैव च काञ्चनस्य।
तदा हि नैकात्मनिधीन[3]पादि मनोरथस्यां[4]प्यतिभारभूतान्॥ २॥

---

## बुद्धचरितव्याख्यायां बालबोधिन्यां द्वितीयः सर्गः।

(१) अथ बुद्धस्य जन्मनः प्रभृत्येव राज्ञोऽभ्युदयमुपवर्णयन्नलौकिकत्वं तस्याभिव्यञ्जयति। आ इति। स राजा शुद्धोदनः तस्य आत्मजितः आत्मानं मनो जयति निगृह्णाति तथाभूतस्य जन्मजरान्तकस्य जन्मनो जराया वार्धकस्य च अन्तकस्य नाशयितुः मोक्षदातुरित्यर्थः। आत्मजस्य पुत्रस्य बुद्धस्य जन्मन आ जन्मनः प्रभृति अहन्यहनि दिनेदिने अम्बुवेगैः जलवेगैः सिन्धुः समुद्र इव अर्थगजाश्वमिश्रैः अर्था धनानि गजा अश्वाश्च ते मिश्रा आदयो येषु तथाभूतैर्भावैः। करणभूतैः। संदृश्यते किल मिश्रशब्दस्याद्यर्थकता ‘क ते शार्ङ्गरवमिश्रा’ इत्यादौ शाकुन्तलप्रभृतिषु। वृद्धिं आधिक्यं पक्षे अभ्युदयं च ययौ जगाम प्रापेत्यर्थः।

(२) वृद्धिमेव विवृणोति धनस्येत्यादिभिः षोडशभिः पद्यैः। धनस्येति। हि यस्मात् तदा तस्मिन्काले मनोरथस्यापि इच्छाया अपि अतिभारभूतान् अतिशयेन भारभूतान् इष्टेभ्योऽप्यत्यन्तमभ्यधिकानित्यर्थः। धनस्य द्रव्यस्य तस्य तस्य तत्तत्प्रकारस्य कृताकृतस्य कृतेन कृत्रिमेण सहितमकृतं कृताकृतं तस्य कृत्रिमस्याकृत्रिमस्य चेत्यर्थः। शाकपार्थिवादित्वात्समासः। न तु क्तेन नञ्विशिष्टेनानञिति। कृतत्वाकृतत्वयोः सामानाधिकरण्यस्यात्राविवक्षणात्। कियन्तिचिद्धि कृतानि कियन्तिचित्पुनरकृतानीति। रत्नस्येति जातावेकवचनम्। रत्नानामित्यर्थः। काञ्चनस्य सुवर्णस्य एवचेत्यव्ययद्वयं चार्थे। नैकात्मनिधीन् नैके अनेके आत्मानो येषां ते च ते निधयस्तान् अनेकान्निधीनित्यर्थः। नैकेति सुप्सुपेति समासः। तदाह वामनः ‘नैकशब्दः सुप्सुपेति समासात्।’ इति। अपादि प्राप्तवान्। पद्यतेर्लुङि चिण् ते पद इति चिण्। निरुपसर्गस्यापि सोपसर्गवदर्थप्रतीतिः। स इति कृतपदं पूर्वस्मादनुवर्तते।

---

१ गजाश्वमित्रै। २ कृताकृतस्येव। ३ निधीन्नवापि, धीनवापि। ४ मनोरथस्यातिबभार भूतान्।

ये पद्मकल्पैरपि च[1] द्विपेन्द्रैर्न मण्डलं शक्यमिहाभिनेतुम्।
मदोत्कटा हैमवता गजास्ते विनापि यत्नादुपतस्थुरेनम् ॥ ३ ॥
नानाङ्कचिह्नैर्नवहेम[2]भाण्डैरभूषितैर्लम्बसटैस्तथान्यैः ।
संचुक्षुभे चास्य पुरं तुरङ्गैर्बलेन मैत्र्या च धनेन चाप्तैः ॥ ४ ॥
पुष्टाश्च तुष्टाश्च तदाऽस्य राज्ये साध्व्योऽरजस्का गुणवत्पयस्काः।
उदग्रवत्सैः[3] सहिता बभूवुर्बह्व्यो बहुक्षीरदुहश्च गावः ॥ ५ ॥

---

( ३ ) य इति । इह भूतले ये पद्मकल्पैः पद्मात्पुण्डरीकसंज्ञाद्दिग्गजविशेषादीषन्न्यूनैः । ईषदसमाप्ताविल्यादिना कल्पप् । पद्मसंज्ञकगजसदृशैरित्यर्थः । दण्डी हि 'कल्पदेशीयदेश्यादि' इत्यत्र कल्पपः सादृश्यवाचकतामाचष्टे । द्विपेन्द्रैः गजश्रेष्ठैः च अपि करणभूतैः मण्डलं राष्ट्रं आनेतुं न शक्यं न शक्याः । शक्यमित्यव्ययं शक्यार्थे। उक्तं हि वामनेन 'शक्यमिति रूपं विलिङ्गवचनस्यापि कर्माभिधायां सामान्योपक्रमात् ।' इति । प्रयुज्यते च कालिदासादिभिः 'शक्यमरविन्दसुरभिः ।' इत्यादौ । वन्यान्किल गजान् ग्रहीतुकामैरादितो वशीकृता गजास्तेषां यूथे प्रवेश्यन्ते । तैश्च संजातपरिचयाः सुखं गेहमानीयन्त इत्याचारः । ते मदोत्कटा मदेन दानजलेन उत्कटा मत्ताः । 'मत्ते शौण्डोत्कटक्षीबा' इत्यमरः । हैमवता हिमवति हिमालये भवाः । तत्र भव इत्यण् । गजाः यत्नात्प्रयासाद्विनापि एनं राजानं उपतस्थुः । अस्य समीपमाजग्मुः ।

( ४ ) नानेति । च किंच अस्य राज्ञः पुरं नगरं नानाङ्कचिह्नैः नानाङ्केषु अनेकेषु शारीरस्थानेषु चिह्नानि आवर्तादीनि अश्वशास्त्रोक्तानि येषां तैः । 'स्थाने क्रोडेन्तिकागसोः' इत्यङ्कशब्दार्थेषु हैमः । 'कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम्' इत्यमरः । नवहेमभाण्डैः नवानि हेम्नः सुवर्णस्य भाण्डानि अश्वालङ्कारा येषु तैः । 'भाण्डं पात्रे वणिङ्मूलधने भूषाश्वभूषयोः ।' इति मेदिनी । अभूषितैः अनलङ्कृतैः इति विरोधे नास्ति भूमौ उषितं वासो येषां तैः । वियति बहुतरं गच्छद्भिरिति भावः । उदग्रप्लुतैरित्यर्थः । लम्बसटैः लम्बाः सटाः ग्रीवोपरिविद्यमानाः केशा येषां तैः । तथा अन्यैस्तद्भिन्नैः अलम्बसटैरित्यर्थः । बलेन बलात् मैत्र्या मित्रभावेन धनेन मूल्यभूतेन करणेन च आप्तैः प्राप्तैः तुरङ्गैः अश्वैः संचुक्षुभे संक्षुब्धं संक्षोभितं वा । आद्येऽश्वानां करणत्वं द्वितीये तु कर्तृत्वं, क्षुभ्यतेश्चान्तर्भावितण्यर्थत्वमिति बोध्यम् । नामाङ्कचिह्नशब्दयोरर्थस्यापाततः पौनरुक्त्यावभासनाभावान्न पुनरुक्तवदाभासोऽलङ्कारः । नवहेमभाण्डैरभूषितैरितिविरोधाभासः ।

( ५ ) हृष्टा इति । तदा अस्य राज्ञः शुद्धोदनस्य राज्ये हृष्टा हर्षयुक्ताः च पुष्टाः पुष्टियुक्ताश्च साध्व्यः शोभनाः । वोतो गुणवचनादिति वा ङीप् । अरजस्का नास्ति

---

१ रपिवद्वि । २ हैम । ३ वत्सासहिता ।

मध्यस्थतां तस्य रिपुर्जगाम मध्यस्वभावः प्रययौ सुहृत्त्वम्।
विशेषतो दार्ढ्यमियाय मित्रं द्वावस्य पक्षावपरस्तु नास॥ ६॥
तथाऽस्य मन्दानिलमेघशब्दः सौदामिनीकुण्डलमण्डिताङ्गः।
विनाश्मवर्षाशनिपातदोषैः काले च देशे प्रववर्ष देवः॥ ७॥
रुरोह सम्यक् फलवद्यथर्तु तदाऽकृतेनापि कृषिः श्रमेण।
ता एव चैवौषधयो रसेन सारेण चैवाभ्यधिका बभूवुः॥ ८॥

---

रजो रेणुर्यासु तथाभूताः अमलिना इत्यर्थः। शेषाद्विभाषेति कप्। गुणवत्पयस्काः गुणवदायुर्वेदोक्तैर्गुणैर्युक्तं पयो दुग्धं यासां तथाभूताः। उरः प्रभृतिभ्य इति कप्। उदग्रवत्सैः उन्नतैः शिशुभिः। 'उच्चप्रांशून्नतोदग्र' इत्यमरः। सहिता युक्ताः। बहुक्षीरदुहः बहु क्षीरं विपुलं दुग्धं दुहन्ति ददतीति यावत् तथाभूताः। 'सत्सूद्विषद्रुहदुहे' त्यादिना क्विप्। बह्व्यः गावः बभूवुः सन्ति स्म।

( ६ ) मध्यस्थतामिति। तस्य शुद्धोदनस्य रिपुः मध्यस्थतां उदासीनतां जगाम मध्यस्वभावः मध्यः शत्रुत्वमित्रत्वयोर्मध्यवर्ती स्वभावो यस्य तथाभूतः उदासीन इत्यर्थः सुहृत्त्वं मित्रत्वं प्रययौ जगाम। मित्रं विशेषतः आधिक्येन दार्ढ्यं दृढतां इयाय प्राप। इण् गतावित्यतो लिट्। एवं च अस्य राज्ञः द्वौ उदासीनो मित्रं चेति द्वावेव पक्षौ आस्ताम् अपरः अन्यः शत्रुपक्षस्तु न आस न बभूव। अस दीप्तावित्यस्य धातूनामनेकार्थत्वात्सत्तायां वृत्तिः। ततश्च लिट्। अन्यथा ह्यस्तेर्भूरिति स्यात्। शत्रुपक्षस्यापि मध्यस्थीभावादिति भावः।

( ७ ) तथेति। तथा एवं अस्य राज्ञो देशे मन्दानिलमेघशब्दः मन्दः अनुच्चः अनिलमेघयोः वायुमेघयोः शब्दो यत्र तथाभूतः सौदामिनीकुण्डलमण्डिताङ्गः सौदामिनी विद्युदेव कुण्डलं तेन मण्डितं विभूषितं अङ्गं देहो यस्य तथाभूतः। 'तडित्सौदामिनी विद्युदि' त्यमरः। देवः मेघः मेघाधिष्ठात्री देवतेत्यर्थः। 'देवो मेघे सुरे राज्ञि' इति मेदिनी। अश्मवर्षाशनिपातदोषैः अश्मनां प्रस्तराणां वर्षं वृष्टिश्च अशनेर्वज्रस्य पाताश्च तद्रूपैर्दोषैः विना, च किंच काले योग्ये समये प्रववर्ष प्रशस्तां वृष्टिं कृतवान्। अश्मपदं वर्षाश्मस्वर्थात्करकासु वा बोध्यम्। प्रकरणात्।

( ८ ) रुरोहेति। तदा तस्मिन्बुद्धजन्मावसरे कृषिः श्रमेण अकृतेनापि यथर्तु ऋतुमनतिक्रम्य ऋत्वनुसारेणेत्यर्थः फलवत् फलेन सहितं यथा तथा सम्यक् रुरोह अजायत। संपन्नेत्यर्थः। च किंच ताः प्राचीना एव ओषधयः रसेन मधुरादिना सारेण वीर्येण च अधिकाः पूर्वत आधिक्ययुक्ताः बभूवुः जाताः। एतेन महानुभावत्वं बुद्धस्य व्यज्यते।

---

१ नाशं, नाश। २ विनास्य। ३ यथार्तं, यथार्तु। ४ कृषिश्रमेण।

शरीरसन्देहकरेऽपि काले संग्रामसंमर्द इव प्रवृत्ते।
स्वस्थाः सुखं चैव निरामयं च प्रजज्ञिरे गर्भधराश्च नार्यः ॥ ९ ॥
यच्च प्रतिभ्वो विभवेऽपि शक्ये न प्रार्थयन्ति स्म नराः परेभ्यः।
अभ्यर्थितः सूक्ष्मधनोऽपि चार्यं तदा न कश्चिद्विमुखीबभूव ॥ १० ॥
ना[1]शेवधिर्बन्धुषु नो[2]प्यदाता नैवाव्रतो नानृतिको न हिंस्रः।
आसीत्तदा कश्चन तस्य राज्ये राज्ञो ययातेरिव नाहु[3]षस्य ॥ ११ ॥

(९) शरीरेति । च किंच गर्भधरा गर्भिण्यो नार्यः स्त्रियः संग्रामसंमर्दे संग्रामेण युद्धेन संमर्दो वीराणामन्योन्यसंघर्षो यत्र तथाभूते अत एव शरीरसंदेहकरे शरीरस्य विषये संदेहस्य अवशिष्येत वा नवेतिसंशयस्य करे कारके काले प्रवृत्ते इव सत्यपि स्वस्थाः स्वास्थ्यसंपन्नाः सत्यः सुखं यथा तथा निरामयं निर्विकारं च यथा तथा प्रजज्ञिरे प्रसूताः । प्रपूर्वाज्जनेः प्रसवार्थकाल्लिट् । गर्भपातयोग्येऽपि काले सुखप्रसवो बुद्धस्य महानुभावतामभिव्यञ्जयति ।

(१०) यच्चेति । यच्चेति किंचेत्यर्थे । प्रतिभ्वः प्रतिभूभूता अपि नराः कर्तारः । 'धनिकाधमर्णयोर्मध्ये यस्तिष्ठति विश्वासार्थं स प्रतिभूः ।' इति भट्टोजीदीक्षिताः । प्रतिभ्व इतिरूपं पुनश्चिन्त्यम् । 'न भूसुधियो' रिति यणो निषेधात् । विभवे संपदि शक्ये शक्तिविषये सति । आत्मनो वैभवसम्पन्नत्वे सतीत्यर्थः । परेभ्यः अधमर्णभूतेभ्य इतरेभ्यो नरेभ्यः । अधमर्णानां सकाशात् इत्यर्थः । न प्रार्थयन्तिस्म धनग्रहणं नेच्छन्ति स्म । अत्र अर्थयतेरागर्वीयत्वेनात्मनेपदित्वेऽपि निवृत्तप्रेषणस्य हेतुमण्णौ परस्मै पदं बोध्यम् । तदाहुः 'निवृत्तप्रेषणाद्धातोर्हेतुमण्णौ शुद्धेन तुल्योऽर्थ' इति । च किंच तदा य इति संबध्यते सूक्ष्मधनः अल्पद्रव्यः अपि कश्चित् कोऽपि अभ्यर्थितः द्रव्यं याचितः अयं सः न विमुखीबभूव दानतः पराङ्मुखो न बभूव । अल्पेऽपि द्रव्ये प्रार्थितः सर्वोऽपि यावच्छक्यं ददावेवेत्यर्थः ।

(११) नेति । नाहुषस्य नहुषपुत्रस्य । ऋष्यन्धकवृष्णिकुरुभ्यश्चेत्यण् । कुरुशब्दस्य हि तद्वंश्ये लक्षणेति । राज्ञः ययातेरेतत्संज्ञकस्य इव तस्य राज्ञः शुद्धोदनस्य राज्ये, अशेवधिः नास्ति शेवधिर्द्रव्यनिधिर्यस्य तथाभूतः कश्चन नरो नासीत् । बन्धुषु बान्धवेष्वदाता द्रव्यस्यापरित्यक्ता । विवक्षाधीना शब्दप्रवृत्तिरिति कर्मणाभिप्रेतस्याधिकरणत्वविवक्षायां सप्तमी । बान्धवेभ्यो धनस्याप्रदातेत्यर्थः । नासीत् । 'सुहृदुपभोग्याः श्रियो महताम् ।' इति हि नीतिविद आचक्षते । अव्रतो व्रतानि शुध्यर्थानि कृच्छ्रचान्द्रायणादीनि न सन्ति यस्य तथाभूतो नैवासीत् । अनृतिकः अनृतमसत्यमस्त्यस्य तथाभूतः असत्ययुक्त इत्यर्थः । अत इनिठनाविति ठन् । नासीत् । हिंस्रो हिंसनशीलश्च । नमिकम्पीत्यादिना रः । नासीत् । हिंसा च परपीडनम् ।

[1] नाशो वधो, नासौ वधो । [2] नैव । [3] नायुषस्य. ।

उद्यानदेवायतनाश्रमाणां कूपप्रपापुष्करिणीवनानाम्।
चक्रुः क्रियास्तत्र च धर्मकामाः प्रत्यक्षतः स्वर्गमिवोपलभ्य ॥ १२
मुक्तश्च दुर्भिक्षभयामयेभ्यो हृष्टो जनः स्वर्ग इवाभिरेमे।
पत्नीं पतिर्वा महिषी पतिं वा परस्परं न व्यभिचेरतुश्च ॥ १३ ॥
कश्चित्सिषेवे रतये न कामं कामार्थमर्थं न जुगोप कश्चित्।
कश्चिद्धनार्थं न चचार धर्मं धर्माय कश्चिन्न चकार हिंसाम् ॥१४॥

( १२ ) उद्यानेति। च किंच । तत्र तस्मिन् राष्ट्रे धर्मकामाः धर्मेच्छवः पुरुषाः स्वर्गं उद्याननिर्माणादिजन्यं प्रत्यक्षतः प्रत्यक्षप्रमाणेनेव उपलभ्य ज्ञात्वा। एतेनावश्यंभाविनी स्वर्गप्राप्तिरिति प्रत्यक्षवद्विज्ञाय उद्यानदेवातयनाश्रमाणां उद्यानानि उपवनानि देवायतनानि देवमन्दिराणि आश्रमा व्रतिनां मठाश्च तेषाम्। कूपाश्च प्रपाः पानीयशालाश्च पुष्करिण्यो जलाशयविशेषाश्च वनानि च तेषां क्रियाः निर्माणकर्माणि चक्रुः। पुष्करिणीप्रमाणं तु वसिष्ठसंहितायाम् 'चतुर्विंशाङ्गुलो हस्तो धनुस्तच्चतुरुत्तरः। शतधन्वन्तरं चैव तावत्पुष्करिणी मता ॥' इति 'आश्रमो व्रतिनां मठे' इति हैमः।

( १३ ) मुक्त इति। किंच दुर्भिक्षभयामयेभ्यः दुर्भिक्षं दुर्लभा भिक्षा यस्मिन् स कालः स्तस्माद्भयं तच्च आमया रोगाश्च तेभ्यो मुक्तः अत एव च हृष्टः आनन्दितो जनः स्वर्गे इव अभिरेमे रमतेस्म। तस्मिन् राष्ट्रे इत्यर्थात्। च किंच पतिः पत्नीं वा महिषी पत्नी पतिं वा। इत्येतौ परस्परं अन्योन्यं सा तं स च तामित्यर्थः। 'कर्मव्यतीहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम्।' इति द्विर्वचने। 'असमासवद्भावे पूर्वपदस्य सुपः सुर्वक्तव्य' इति सुः। न व्यभिचेरतुः परस्परं विहायान्यत्रानुरागं न चक्रतुः।

( १४ ) कश्चिदिति। कश्चित्कोपि रतये प्रीत्यर्थमेव कामं स्त्रीसंभोगरूपं तृतीयं पुरुषार्थं न सिषेवे सेवितवान्। अपत्यायैव तु दारान्सेवितवान्तसर्वोऽपीति भावः। कश्चित् कोऽपि कामार्थं कामप्राप्त्यर्थमेव अर्थं द्रव्यं न जुगोप रक्षितवान्। किंतु धर्मार्थमेव रक्षितवानिति भावः। 'परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ।' इति शास्त्रं सर्वत एव सावेगं प्रचचारेति भावः। 'ते श्रोत्रियास्तत्त्वविनिश्चयाय भूरिश्रुतं शाश्वतमाद्रियन्ते। इष्टाय पूर्ताय च कर्मणेऽर्थान्दारानपत्याय तपोऽर्थमायुः।' इति भवभूतिः। कश्चित्कोपि धनार्थं द्रव्यप्राप्त्यर्थं धर्मं न चचार आचरितवान् कश्चित् कोपि धर्माय पुण्यार्थमपि हिंसां प्राणिवधं न चकार कृतवान्। स्वर्गप्राप्तिफलकमपि यज्ञादिकं प्राणिवधभिया न चकारेति भावः। अवैदिकमतानुयायिनामेवैतद्युज्यते। वैदिका हि वैधहिंसाया अदुष्टतामेवाभिप्रयन्तीति। विशेषस्तु स्मृतितत्त्वादौ द्रष्टव्यः। 'रतिः स्त्री स्मरदारेषु रागे' इति मेदिनी 'धर्माः पुण्ययमन्याये' त्यमरः।

१ स्वर्गमिवा।

स्तेयादिभिश्चाप्यभितश्च नष्टं स्वस्थं स्वचक्रं परचक्रमुक्तम्।
क्षेमं सुभिक्षं च बभूव तस्य पुराण्यरण्यस्य[1] यथैव राष्ट्रे॥ १५॥
तदा हि तज्जन्मनि तस्य राज्ञो मनोरिवादित्यसुतस्य राज्ये।
चचार हर्षः प्रणनाश पाप्मा जज्वाल धर्मः कलुषं[2] शशाम॥१६॥
एवंविधा राजसुतस्य तस्य सर्वार्थसिद्धिश्च यतो बभूव।
ततो नृपस्तस्य सुतस्य नाम सर्वार्थसिद्धोऽयमिति प्रचक्रे॥ १७॥
देवी तु माया विबुधर्षिकल्पं दृष्ट्वा विशालं तनयप्रभावम्।
जातं प्रहर्षं न शशाक सोढुं ततोऽविनाशाय दिवं जगाम॥ १८॥

(१५) स्तेयादिभिरिति। च किंच तस्य स्वचक्रं स्वराष्ट्रं स्तेयादिभिः चौर्यप्रभृतिभिः कर्तृभिः अभितः आत्मनः समीपात् नष्टं दूरं गमितं परित्यक्तमिति यावत्। नशेरन्तर्भावितण्यर्थान्निष्ठा। स्वस्थं स्वास्थ्यसंपन्नं परचक्रमुक्तं परेषां शत्रूणां चक्रेण विजयार्थं समभिपतता सैन्येन मुक्तं वर्जितम्। क्षेमं कुशलयुक्तं, सुभिक्षं सुभिक्षयुक्तं च बभूव आसीत्। क्षेमसुभिक्षशब्दावत्रार्शआद्यजन्तौ बोध्यौ। किंच तस्य पुराणि नगराणि यथा अरण्यस्य एतन्नाम्नो रैवतकमनुपुत्रस्य राष्ट्रे तथा बभूवुरिति शेषः। 'अरण्यश्च प्रकाशश्च निर्मोहः सत्यवान् कृती। रैवतस्य मनोः पुत्राः' इति हरिवंशे। 'सैन्यरथाङ्गयोः। राष्ट्रे दम्भान्तरे' इति चक्रशब्दार्थेषु मेदिनी।

(१६) तदेति। तदा तज्जन्मनि तस्य बुद्धस्य जन्मनि सति। आदित्यसुतस्य सूर्यपुत्रस्य मनोः एतत्संज्ञकस्य राज्ञ इव तस्य शुद्धोदनस्य राज्ये हि निश्चयेन हर्षः आनंदः चचार प्रचारं प्राप। पाप्मा पापं प्रणनाश प्रकर्षेण नाशं प्राप। 'अस्त्री पङ्कं पुमान्पाप्मा पाप'मित्यमरः। धर्मः जज्वाल दीप्तिं (प्रकाशं) प्राप। कलुषं पापजनकं कर्म शशाम शान्तं (नष्टं) बभूव। हेतुहेतुमतोरभेदात्कलुषमित्युक्तिः।

(१७) एवमिति। यतो यस्मात्कारणात् तस्य राजसुतस्येति शेषे षष्ठी। राजपुत्रस्य संबन्धेनेत्यर्थः एवंविधा निर्दिष्टप्रकारा सर्वार्थसिद्धिः सर्वेषामर्थानां विषयाणामुक्तपूर्वाणां सिद्धिः संपत्तिः बभूव जज्ञे ततः तस्मात्कारणात् नृपो राजा शुद्धोदनः अयं पुत्रः सर्वार्थसिद्धः इति तस्य सुतस्य नाम प्रचक्रे कृतवान्। सर्वार्थसिद्ध इति नाम चकारेति भावः।

(१८) देवीति। देवी राज्ञी माया तु विबुधर्षिकल्पं देवर्षिसदृशं। अभ्युपगम्यते हि कल्पबपि सादृश्यार्थे दण्ड्यादिभिरालङ्कारिकैः। विशालं विस्तृतं तनयप्रभावं पुत्रस्य प्रभावं दृष्ट्वा जातं प्रादुर्भूतं हर्षं आनन्दं सोढुं सहितुम्। तीषसहेती ड्विकल्पात्तदभावे सहिवहोरोदवर्णस्येत्योत्। न शशाक न समर्था बभूव। ततः अस्मा-

१ ण्यरण्यानि। २ कलुषः।

30HH

**ततः कुमारं सुरगर्भकल्पं स्नेहेन भावेन च निर्विशेषम् ।**
**मातृष्वसा मातृसमप्रभावा संवर्धयामात्मजवद्बभूव ॥ १९ ॥**
**ततः स बालार्क इवोदयस्थः समीरितो वह्निरिवानिलेन ।**
**क्रमेण सम्यग्ववृधे कुमारस्ताराधिपः पक्ष इवातमस्के ॥ २० ॥**
**ततो महार्हाणि च चन्दनानि रत्नावलीश्चौषधिभिः सगर्भाः ।**
**मृगप्रयुक्तान् रथकांश्च हैमानाचक्रिरेऽस्मै[1] सुहृदालयेभ्यः ॥ २१ ॥**

मर्थ्यात् अविनाशाय अविनाशं अमरत्वमापादयितुम् । क्रियार्थोपपदस्य चेति चतुर्थी। दिवं अमराणां लोकं स्वर्गं जगाम गतवती । न खल्वमन्दोऽयमानन्दः शक्यो मर्त्येन शरीरेण धारयितुमित्यमरत्वमिवासादयितुं दिवं जगामेति भावः । गम्योत्प्रेक्षा । आनन्दोपि मर्यादामतिक्रान्तो मरणमुपनमयतीति भावः ।

( १९ ) तत इति । ततो मातृनिधनानन्तरं मातृसमप्रभावा मात्रा जनन्या मायादेव्या समः प्रभावः प्रभुत्वं यस्यास्तथाभूता मातृष्वसा मातुर्बुद्धस्य जनन्याः स्वसा भगिनी कर्त्री । 'मातृपितृभ्यां स्वसा' इति षत्वम् । सुरगर्भकल्पम् देवानां बालेभ्य ईषन्न्यूनं तत्तुल्यमित्यर्थः । **'गर्भो भ्रूणेऽर्भके** कुक्षौ' इति मेदिनी । कुमारं बालं बुद्धं स्नेहेन प्रेम्णा भावेन भक्त्या च निर्विशेषं निर्गतो विशेष आत्मनः पुत्राद्भेदो यस्मिन्कर्मणि तद्यथा तथा आत्मजवत् स्वपुत्रवत् संवर्धयांबभूव सम्यग्वृद्धिं प्रापितवती पालयामासेति यावत्। अपाणिनीयोऽयं भुवो व्यवहितत्वेन प्रयोगः । मौग्धबोधास्तु 'भ्वस्क्रन्वामः' इति बोपदेवीये सूत्रेपञ्चम्यैव परतः प्रयोगे सिद्धे पुनरनुग्रहणं क्रियाविशेषणोपसर्गव्यवधानेऽपि प्रयोगार्थम् । तत एव च 'तं पातयाम्प्रथममासे'ति रघुः 'उक्षाम्प्रचक्रुर्नगरस्य मार्गान् ।' इति भट्टिरित्याहुः ।

( २० ) तत इति । ततः तदनन्तरं सः कुमारो बालो बुद्धः उदयस्थः पूर्वपर्वते स्थितः । 'उदयः पूर्वपर्वतः ।' इत्यमरः । बालार्क अचिरोदितः सूर्य इव अनिलेन वायुना समीरितः सम्यक्प्रेरितः वह्निः अग्निरिव अतमस्के नास्तितमोऽन्धकारो यस्मिंस्तथाभूते शुक्ल इत्यर्थः पक्षे ताराधिपः नक्षत्राणां पतिश्चन्द्र इव क्रमेण सम्यक् ववृधे वृद्धिं प्राप्तवान् । मालोपमालङ्कारः 'मालोपमा यदेकस्योपमानं बहु दृश्यत' इति लक्षणात् ।

( २१ ) तत इति । ततः तदनन्तरं तत्कर्मनियुक्ता इति कर्तृपदमत्राध्याहार्यम् । महार्हाणि महामूल्यानि अतिमात्रं योग्यानि वा चन्दनानि ओषधिभिः रोगनिवारिकाभिः सगर्भास्तुल्याः । सगर्भपदस्य बन्धुवाचकतया सादृश्यवाचकता । तदाह केशवमिश्रः 'बन्धुचौरारिवंशाद्यैः सादृश्यप्रतिपत्तयः ।' इति । सन्ति चौषधिवद्रोगनिवारकाणि रत्नान्यपि। विषादिप्रतिबन्धकानि चैतान्यवश्यं धारणीयानीत्यायुर्वेद

१ ऽसौ ।

वयोऽनुरूपाणि च भूषणानि हिरण्मया हस्तिमृगाश्च[1] कोकाः।
रथाश्च गावो वसनप्रयुक्ता गन्त्र्यश्च[2] चामीकररूप्यचित्राः ॥२२॥
एवं स तैस्तैर्विषयोपचारैर्वयोऽनुरूपैरुपचर्यमाणः।
बालोऽप्यबालप्रतिमो बभूव धृत्या च शौचेन धिया श्रिया च॥२३॥
वयश्च कौमारमतीत्य मध्यं संप्राप्य बालः स हि राजसूनुः।
अल्पैर[3]होभिर्बहुवर्षगम्या जग्राह विद्याः स्वकुलानुरूपाः ॥ २४॥

इव स्मृतयोऽप्याचक्षते। 'तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्।' इति तृतीया। मृगप्रयुक्तान् मृगाणां प्रयुक्तं प्रयोगो योजनमित्यर्थः येषु तान्। मृगवाह्यानित्यर्थः। हैमान् हेममयान्। हेम सुवर्णम्। रथकान् अल्पान् रथान्। 'अल्पे' इत्यल्पार्थः कन्। अस्मै अस्य कुमारस्यार्थे। तादर्थ्ये चतुर्थी। सुहृदालयेभ्यः मित्रगृहेभ्यः आचक्रिरे आकारितवन्तः आहूतवन्त इत्यर्थः। 'प्रेष्यन्तामिति 'प्रार्थितवन्त इति यावत्। आङ्पूर्वोऽयमन्तर्भावितण्यर्थः करोतिः। 'हूतिराकारणाह्वान'मित्यमरः।

(२२) वयोनुरूपाणीति। च किं च। वयोऽनुरूपाणि वयसो योग्यानि भूषणानि अलङ्काराः। हिरण्मयाः सुवर्णनिर्मिताः। हिरण्यशब्दात् विकारार्थे मयटि दाण्डिनायनेत्यादिना यलोपनिपातनम्। हस्तिमृगाः हस्तिनो गजा मृगा हरिणाश्च। च किं च कोकाः चक्रवाकाः पशुसाहचर्याद्वृका वा। 'कोकश्चक्रश्चक्रवाक' इति 'कोकस्त्वीहामृगो वृक' इति चोभयत्राप्यमरः। रथा हिरण्मया इति संबध्यते। च किंच वसनप्रयुक्ता वसनानां वस्त्राणां प्रयुक्तं प्रयोगो विनियोग इत्यर्थः यासु तथाभूता वस्त्रनिर्मिता इत्यर्थः। गावो धेनवः। च किं च चामीकररूप्यचित्राः चामीकरेण चमीकराख्य आकरविशेषे जातेन सुवर्णेन रूप्येण च चित्रा नानावर्णाः गन्त्र्यः वृषवाह्याः शकट्यः आचक्रिरे इति प्रयोगविपरिणामेन संबन्धः आहूता इत्यर्थः। आहूयानीता इति यावत्। 'गन्त्री कम्बलिवाह्यकम्' इत्यमरः। कम्बलिनो वृषभाः।

(२३) एवमिति। एवमेतेन प्रकारेण वयोऽनुरूपैः वयसो योग्यैः तैस्तैः विषयोपचारैः विषया वस्तून्येवोपचाराः सेवासाधनानि तैः करणभूतैः। उपचर्यमाणः सेव्यमानः स बुद्धः बालः सन्नपि धृत्या संतोषेण धैर्येण वा। 'धृतिर्नैष्ठ्यां स्त्रियां तुष्टौ योगभिद्धैर्यधारणे'इति मेदिनी। शौचेन शुचिभावेन। 'इगन्ताच्च लघुपूर्वात्' इत्यण् भावे। धिया ज्ञानेन बुध्या वा। श्रिया शरीरशोभया च अबालप्रतिमः अबालैः सदृशः। बभूव।

(२४) वय इति। च किं च स बालो राजसूनुः राजपुत्रो बुद्धः कौमारं कुमाराणामिदं वयः अवस्थाम् बाल्यावस्थामित्यर्थः। अतीत्य अतिक्रम्य।

१ मृगाश्वकाश्च। २ गन्त्रीश्च, तन्त्रीश्च। ३ अन्यै-।

नैःश्रेयसं तस्य तु भव्यमर्थं श्रुत्वा पुरस्तादसितान्महर्षेः।
कामेषु संगं जनयाम्बभूव बुद्धिर्भवच्छाक्यकुलस्य राज्ञः॥ २५॥
कुलात्ततोऽस्मै स्थिरशीलयुक्तात्साध्वीं वपुर्ह्रीविनयोपपन्नाम्।
यशोधरां नाम यशोविशालां तुल्याभिधानां श्रियमाजुहाव॥ २६॥

मध्यं वयः तारुण्यं सम्प्राप्य हि निश्चयेन बहुवर्षगम्याः बहुभिर्वर्षैः गम्या ज्ञातुं शक्याः। 'सर्वे गत्यर्था ज्ञानार्था' इति न्यायात्। स्वकुलानुरूपाः आत्मनः कुलस्य योग्याः विद्याः अल्पैः अहोभिः दिवसैः जग्राह ज्ञातवान्। 'ग्रहणं स्वीकारादरकरोपरागोपलब्धिबन्दीषु' इति मेदिनी। अस्मिन्पुनरर्थे बाल इति विशेषणमनर्थकमिव प्रतिभाति। तत एव च बालो बाल्यं नाम षोडशाब्दावधिकं सामान्यं वयोऽनुभवन् तत्र कौमारं पञ्चमाब्दावधिकं वयः अतीत्य मध्यं बाल्य एव मध्यभूतं दशमवर्षावधिकं पौगण्डं नाम वयः संप्राप्येत्यर्थ एव ज्यायानिति नो बुद्धिः। पञ्चमाब्दमेव हि विद्यारम्भकालोऽनुशिष्यते धर्मज्ञैः। 'तथा हि संप्राप्ते पञ्चमे वर्षे * * * विद्यारम्भं तु कारयेदि'ति विष्णुधर्मोत्तरे। 'कौमारं पञ्चमाब्दान्तं पौगण्डं दशवार्षिकम्। इति 'आषोडशाद्भवेद्बाल' इतिच प्राञ्चः। तत्र तावद्बाल्यं सामान्यं आजन्मनः षोडशाब्दान्तं बालपदप्रयोगस्य संदर्शनात्। तत्र च तिस्रोऽवस्थाः कौमारं पौगण्डं बाल्यमिति। तत्र च मध्यं पौगण्डमिति सर्वं समञ्जसम्। यथावसरं च जातकर्मादीन्संस्कारान्निर्वर्तयता शुद्धोदनेन तारुण्यं यावन्न ग्राहितो विद्यां कुमार इति नैतत्संभवति। इति।

(२५) नैःश्रेयसमिति। तु किन्तु। यद्यपि गृहीता विद्यास्तथापीत्यर्थः। भवच्छाक्यकुलस्य भवत् सत् विद्योतमानं वा यच्छाक्यानां कुलं तस्य। 'भवद्युष्मत्सतोस्त्रिषु' इति मेदिनी। भवच्छब्दश्च भातेर्डवतुप्रत्यये निष्पन्नः। तेन भातीति भवानित्यप्यर्थः। राज्ञः शुद्धोदनस्य बुद्धेः कर्त्री पुरस्तात्पूर्वं महर्षेः असितात् तस्य बुद्धस्य भव्यं भवनीयं भाविनमित्यर्थः। नैःश्रेयसं निःश्रेयसस्य मोक्षस्यायं नैःश्रेयसस्तं मोक्षसंबन्धिनमर्थं विषयं श्रुत्वा कामेषु विषयेषु सङ्गं आसक्तिं जनयांबभूव उत्पादितवती। 'श्रेयो निःश्रेयसामृतम्' इति मोक्षपर्यायेष्वमरः। विषयासक्तौ तस्य प्रयत्नं विचिन्तितवान् राजेतिभावः।

(२६) कुलादिति। ततस्तस्माद्धेतोः स राजेति शेषः। अस्मै एतस्य बुद्धस्य कृते। स्थिरशीलयुक्तात् स्थिरं अविभ्रंशि यत् शीलं सद्वृत्तं तेन युक्तात्। 'शीलं साधुवृत्तस्वभावयोः।' इति हैमः। कुलात् कस्माच्चन वंशात्। साध्वीं शोभनां वपुर्ह्रीविनयोपपन्नाम् वपुषा शरीरसौष्ठवेन ह्रिया लज्जया विनयेन च उपपन्नां युक्ताम्। यशोविशालां यशसा कीर्त्या विशालां विस्तृतां विशालयशसमिति यावत्। प्रकृत्यादि-

१ वृद्धिः। २ शीलसंयुताम्। ३ तामाभिधानां।

**अथापरं भूमिपतेः प्रियोऽयं सनत्कुमारप्रतिमः कुमारः।**
**सार्धं तया शाक्यनरेन्द्रवध्वा शच्या सहस्राक्ष इवाभिरेमे॥ २७॥**
**किञ्चिन्मनःक्षोभकरं प्रतीपं कथं च पश्येदिति सोऽनुचिन्त्य।**
**वासं नृपो ह्यादिशति स्म तस्मै हर्म्योदरेष्वेव न भूप्रचारम्॥ २८॥**
**ततः शरत्तोयदपाण्डरेषु भूमौ विमानेष्विव रञ्जितेषु।**
**हर्म्येषु सर्वर्तुसुखाश्रयेषु स्त्रीणामुदारैर्विजहार तूर्यैः॥ २९॥**

---

त्वाद्यशसस्तृतीया। यशोधरां नाम तुल्याभिधानां तुल्यं सदृशं योग्यमन्वर्थत्वात् अभिधानं नाम यस्यास्तथाभूता। विशालत्वादस्या यशसो यशधरेत्यन्वर्थमभिधानमिति भावः। श्रियं लक्ष्मीम्। मूर्तामिव लक्ष्मीं कन्यकामित्यर्थः। एतेनास्याः सौष्ठवाद्यतिशयो गम्यते। आजुहाव आहूयानीतवानित्यर्थः। अत्र वपुर्ह्वाति दुःश्रवत्वं दोषः। तुल्यमिति च सदृशपदस्य योग्यार्थे पर्यायपरिवृत्तिसहिष्णुतां विवक्षता प्रयुक्तम्। नैतच्छोभते। अवाचकत्वात्। आङ्पूर्वश्च ह्वयतिराह्वयानयने संप्रार्थ्यानयने च कविनानेन प्रयुज्यते।

( २७ ) अथेति। अपरं किं च। अथ कन्यकानयनानन्तरं परिणयात्परमित्यर्थः। अवश्यमत्रोपवर्णनीयोऽपि परिणयः कविना नोपवर्णितः। भूमिपते राज्ञः शुद्धोदनस्य प्रियः सनत्कुमारप्रतिमः सनत्कुमारसदृशः अयं कुमारो बुद्धः शच्या इन्द्राण्या सह सहस्राक्ष इन्द्र इव 'आखण्डलः सहस्राक्ष' इति शक्रपर्यायेष्वमरः। तया आहूयानीतया शाक्यनरेन्द्रवध्वा शाक्यान्वयो नरेन्द्रो राजा शाक्यनरेन्द्रः शुद्धोदनःतस्य वध्वा स्नुषयाऽऽत्मनो भार्ययेत्यर्थः। सार्धं सह अभिरेमे रममाणो बभूव। 'वधूर्जाया स्नुषा स्त्री चे'त्यमरः। उपमालङ्कारः।

( २८ ) किंचिदिति। कुमार इति कर्तृपदं पूर्वस्मादनुवर्तते। कुमारः कथं च कथमपि केनापि प्रकारेणेत्यर्थः। मनःक्षोभकरं मनसः क्षोभस्य चाञ्चल्यस्य करं कारकं। प्रतीपं प्रतिकूलं किंचित्किमपि पश्येत् इति अनुचिन्त्य चिन्तयित्वा सः नृपो राजा शुद्धोदनः कर्ता तस्मै कुमाराय हर्म्योदरेषु गृहान्तर्भागेषु वासं वसतिमेव आदिशति स्म आज्ञापितवान् भूप्रचारं हर्म्यबहिर्भूतायां भूमौ संचारं नादिशति स्म नाज्ञापितवान्। 'लट्स्मे' इति लिडर्थे लट्। 'हर्म्यादि धनिनां वासः।' इत्यमरः। राज्ञोऽपि धनित्वमभिप्रेत्यात्र तद्गृहेऽयं प्रयुक्तः शब्दः।

( २९ ) तत इति। ततो यस्माद्धर्म्योदरेष्वेव वासमादिष्टवान् राजा तस्मात् कुमार इत्यनुवर्तते। भूमौ विद्यमानेषु विमानेष्विव शरत्तोयदपाण्डरेषु शरदः संबन्धिनो ये तोयदा मेघास्तद्वत्पाण्डरेषु शुभ्रेषु सर्वर्तुसुखाश्रयेषु सर्वेषामृतूनां संबन्धि यत्सुखं तस्याश्रयेष्वाश्रयभूतेषु रञ्जितेषु शुक्लादिवर्णैर्विभूषितेषु हर्म्येषु स्त्रीणां उदारैः असाधारणैस्तूर्यैर्वाद्यैः स्त्रीभिर्वाद्यमानैर्वाद्यैःकरणभूतैरित्यर्थः। विजहार विहारं कृतवान्। 'वाद्यं वादित्रमातोद्यं तूर्यं' इति शारदी नाममाला।

कलैर्हि चामीकरबद्धकक्षैर्नारीकराग्राभिहतैर्मृदङ्गैः।
वराप्सरोनृत्यसमैश्च नृत्यैः कैलासवत्तद्भवनं रराज॥ ३०॥
वाग्भिः कलाभिर्ललितैश्च हावैर्मन्दैः सखेलैर्मधुरैश्च हासैः।
तं तत्र नार्यो रमयांबभूवुर्भ्रूवाञ्चितैरर्धनिरीक्षितैश्च॥ ३१॥
ततश्च कामाश्रयपण्डिताभिः स्त्रीभिर्गृहीतो रतिकर्कशाभिः।
विमानपृष्ठान्न महीं जगाम विमानपृष्ठादिव पुण्यकर्मा॥ ३२॥

( ३० ) कलैरिति। तत् बुद्धाधिष्ठितं भवनं गृहं कलैः अव्यक्तमधुरध्वनिविशेष्टैः। 'ध्वनौ तु मधुरास्फुटे। कल' इत्यमरः। अर्शआदित्वादच्। चामीकरबद्धकक्षैः चामीकरेण सुवर्णेन तन्निर्मितैस्तन्तुभिरित्यर्थः बद्धा कक्षा कक्षातुल्यो मध्यदेशो येषां तथाभूतैः। यत्रेदानीं नध्र्यो निवेश्यन्ते तत्रैव सौवर्णास्तन्तवस्तदा विन्यवेश्यन्तेत्यत उक्तं चामीकरेत्यादि। नारीकराग्राभिहतैः नारीणां करैः अभिहतैः कृताघातैर्मृदङ्गैः प्रसिद्धैरानद्धवाद्यविशेषैः च किं च वराप्सरो नृत्यसमैः वराणां श्रेष्ठानामप्सरसां नृत्यैः समैः तुल्यैः नृत्यैर्नर्तनैश्च करणभूतैः तद्भवनं गृहं कैलासवत् रराज शुशुभे। भगवता हि महानटेनाधिष्ठिते प्रचुरं संगीतं कैलास इति।

( ३१ ) वाग्भिरिति। तत्र प्रासादे नार्यः कर्त्र्यः तं बुद्धं कलाभिः अव्यक्तमधुराभिर्वाग्भिः वाणीभिः ललितैर्मनोहरैः हावैः भ्रूनेत्रादिविकारैः संभोगेच्छाप्रकाशकैर्व्यापारविशेषैः सखेलैः सलीलैरित्यर्थः मधुरैर्मनोहारिभिश्च मन्दैः हासैः स्मितैः भ्रुवा भ्रूभङ्गेन अञ्चितैः अन्वितैः। अञ्चुगताविव्यतो निष्ठा। निरुपसर्गस्यापि चोपसृष्टवदर्थप्रतीतिः। अर्धनिरीक्षितैः अर्धैरसमग्रैः निरीक्षितैरवलोकनैश्च करणभूतैः रमयांबभूवुः रममाणं चक्रुः। रमेण्र्यण्याल्लिट्। 'भ्रूनेत्रादिविकारैस्तु संभोगेच्छाप्रकाशकः। भाव एवाल्पसंलक्ष्यविकारो हाव उच्यते॥' इति दर्पणे।

( ३२ ) तत इति। ततो यस्मान्नार्यो रमयांबभूवुस्तस्माच्च कामाश्रयपण्डिताभिः कामस्य मदनस्य आश्रय आश्रयणे पण्डिताभिः चतुराभिः रतिकर्कशाभिः रतौ संभोगे कर्कशाभिः कठोराभिः निर्दयं रममाणाभिरित्यर्थः। स्त्रीभिः गृहीतो धृतः वशीकृत इति यावत्। स बुद्ध इति शेषः। पुण्यकर्मा पुण्यं पवित्रं कर्म यस्य तथाभूतः पुरुषो विमानपृष्ठात् विमानस्य व्योमयानस्य पृष्ठादिव विमानपृष्ठात् विमानस्य सार्वभौममन्दिरस्य पृष्ठात् पृष्ठं परित्यज्य। ल्यब्लोपे पञ्चमी। महीं भूमिं न जगाम गतवान्। पुण्यकर्माणः किल दिवं गता अप्सरोभिः परिवृता विमानैर्विहरन्तीति प्रसिद्धिः। 'विमानं देवतायाने सार्वभौमगृहेऽपि च।' इति हैमः। उपमालङ्कारः।

१ हारैर्म-। २ रसयांबभूवुः। ३ भ्रूवञ्चितै-।

नृपस्तु तस्यैव विवृद्धिहेतोस्तद्भाविनार्थेन[1] नु[2] चोद्यमानः ।
शमेऽभिरेमे विरराम पापाद्भेजे दमं संविबभाज साधून् ॥ ३३ ॥
नाधीरवत्कामसुखे ससञ्ज[3] न संररञ्जे विषमं जनन्याम् ।
धृत्येन्द्रियाश्वांश्चपलान्विजिग्ये बन्धूंश्च पौरांश्च गुणैर्जिगाय ॥ ३४ ॥
नाध्यैष्ट दुःखाय परस्य विद्यां ज्ञानं शिवं यत्तु तदध्यगीष्ट ।
स्वाभ्यः प्रजाभ्यो हि यथा तथैव सर्वप्रजाभ्यः शिवमाशशंसे ॥ ३५ ॥

( ३३ ) नृप इति । नृपः शुद्धोदनस्तु तद्भाविना तस्मिन् बुद्धे भावी भविष्यन् यः अर्थो निर्वाणप्राप्त्यादिलक्षणः तेन चोद्यमानो नु प्रवर्त्यमान इव तस्यैव बुद्धस्यैव विवृद्धिहेतोः अभ्युदयार्थं शमे शान्तौ चित्तोपशम इत्यर्थः अभिरेमे अरमत । पापात् विरराम विरतवान्। 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इति पञ्चमी । दमं इन्द्रियनिग्रहं भेजे सेवितवान् । 'शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दम' इत्यमरः । साधून् सतः पुरुषान् संविबभाज आत्मनोऽर्थेषु संविभागिनः ( अंशभागिनः ) कृतवान् ।

( ३४ ) नेति । नृप इत्यनुवर्तते । अधीरवत् धैर्यशून्य इव कामसुखे विषयसुखे न ससञ्ज सक्तो बभूव । सन्ज संग इत्यतो लिट् । जनन्यां दयायां विषमं अतुल्यं यथा तथा न संररञ्जे अनुरागं चकार । रञ्ज राग इत्यतो लिट् । कदाचिन्न्यूनं कदाचित्पुनरधिकमिति दयायां विषममेव रागं न चकार किंतु निरन्तरं समानमेव प्रेमाणं चकार । सर्वदैव सममेव दयालुरासीदित्यर्थः । 'जननी तु दयामात्रोः' इति मेदिनी । चपलान् चापल्ययुक्तान् इंद्रियाश्वान् इन्द्रियरूपान् अश्वान् धृत्या धैर्येण करणभूतेन विजिग्ये वशीकृतवानित्यर्थः । 'सन्लिटोर्जे'रिति कुत्वम् । 'विपराभ्यां जेः' इत्यात्मने पदं च । गुणैः सद्भिर्गुणैर्दयादाक्षिण्यादिभिः करणभूतैः बन्धून्बान्धवान् पौरान् पुरवासिनो लोकांश्च जिगाय वशीकृतवानित्यर्थः ।

( ३५ ) नेति । स नृपः परस्य दुःखाय दुःखार्थं दुःखजनिकामित्यर्थः । विद्यां नाध्यैष्ट नाधीतवान् । अधिपूर्वात् इङ् अध्ययन इत्यतो लुङ् । पशुहिंसनादौ कारणभूतां यागाद्युपदेशिनीं कर्मकाण्डरूपां विद्यां नाधीतवानिति भावः । यत् शिवं शुभं ज्ञानं ज्ञानसाधनं विद्या उपनिषद्रूपेत्यर्थः । तत् अध्यगीष्ट अधीतवान् । अधिपूर्वादिङो लुङि 'विभाषा लुङ्लृङोः' इति विकल्पेन गाङादेशे 'घुमास्थे'त्यादिना ईत् । यथा हि यथा च स्वाभ्यः स्वीयाभ्यः प्रजाभ्यः अपत्येभ्यः तथैव सर्वप्रजाभ्यः सर्वाभ्यः प्रजाभ्यः ( जनेभ्यः ) । शिवं कल्याणं आशशंसे ईहितवान् ।

१ भावितार्थेन । २ च । ३ ससञ्जे ।

तं भासुरं चाङ्गिरसाधिदेवं यथावदानर्च तदायुषे सः ।
जुहाव हव्यान्यकृशे कृशानौ ददौ द्विजेभ्यः कृशरं च गाश्च ॥ ३६॥
सस्नौ शरीरं पवितुं मनश्च तीर्थाम्बुभिश्चैव गुणाम्बुभिश्च ।
वेदोपदिष्टं सममात्मजेन सोमं पपौ शान्तिसुखं च हार्दम् ॥ ३७॥
सान्त्वं बभाषे न च नार्थवद्यज्जजल्प तत्त्वं न च विप्रियं यत् ।
सान्त्वं ह्यतत्वं परुषं च तत्त्वं ह्रियाऽशकन्नात्मन एव वक्तुम् ॥३८॥

(३६) तमिति । च किंच स राजा तदायुषे तस्य बुद्धस्य आयुषे आयुरभिवर्धयितुं तं भासुरं भासनशीलं आङ्गिरसाधिदेवं आङ्गिरसस्य बृहस्पतेः अधिदेवं अधिदेवताभूतं ब्रह्माणं यथावत् यथोचितं आनर्च पूजयामास । अर्चतेर्लिटि 'तस्मान्नुड्द्विहल' इति नुट् । उक्तं किल बृहस्पत्यधिदेवत्वं ब्रह्मणो ग्रहयागतत्त्वे 'द्विजमाङ्गिरसं पीतं सैन्धवं च षडङ्गुलम् । * * * ब्रह्माधिदैवं सूर्यास्यमिन्द्रप्रत्यधिदैवतम् ।' इति अकृशे अक्षीणे प्रज्वलित इत्यर्थः कृशानौ अग्नौ हव्यानि होमद्रव्याणि जुहाव हुतवान् । द्विजेभ्यः ब्राह्मणेभ्यः कृशरं तिलौदनं च गाश्च ददौ दत्तवान् । 'कृशरोऽपि तिलौदनं' इति हारावली । भावप्रकाशस्तु 'तन्दुला दालिसंमिश्रा लवणार्द्रकहिङ्गुभिः । संयुक्ताः सलिलैः सिद्धाः कृशराः कथिता बुधैः ।' इत्याह ।

(३७) सस्नाविति । शरीरं मनश्च पवितुं शोधयितुं क्रमेण तीर्थाम्बुभिः गङ्गादितीर्थानां जलैः च गुणाम्बुभिः गुणा धीधैर्यप्रभृतयः त एव अम्बूनि जलानि तैश्च सस्नौ स्नातवान् । ष्णा शौच इत्यतो लिट् । 'रजस्तमश्च मनसो द्वौ दोषौ समुदीरितौ ।' 'धीधैर्यात्मादिविज्ञानं मनोदोषौषधं परम् ।' इति च वाग्भटः । च किंच आत्मजेन पुत्रेण समं सह सः शान्तिसुखं शान्त्या सहितं सुखं शान्तिसुखं तद्धेतुमित्यर्थः । हार्दं प्रेमहेतुमित्यर्थः । 'प्रेमा ना प्रियता हार्दम् ।' इत्यमरः । उभयत्रापि हेतुहेतुमतोरभेदेनाभिधानमुपचारात् । वेदोपदिष्टं वेदैः उपदिष्टं पेयतया उक्तम् । 'दिशिरुच्चारणक्रिय' इत्युक्तेः । सोमं सोमसंज्ञाया ओषध्या रसं । प्रयुज्यते हि सोमरसेऽपि सोमपदं सोमपीथीत्यादौ । पपौ पीतवान् । सोमस्वरूपं तु प्रोक्तं चरके 'सोमनामौषधिराजः पञ्चदशपर्णः स सोम इव हीयते वर्धते च ।' इति । एतस्य चोक्तगुणविशिष्टत्वं सुश्रुते चिकित्सितस्थाने विस्तरशो द्रष्टव्यम् । 'अभेदेनाभिधा हेतुर्हेतोर्हेतुमता सहे'त्युक्तलक्षणो हेतुरलङ्कारः ।

(३८) सान्त्वमिति । स राजा यत् अर्थवत् यथार्थं न तत्सान्त्वं अत्यन्तमधुरं प्रियमित्यर्थः न बभाषे नोक्तवान् । यत् च न विप्रियं अप्रियं परुषमित्यर्थः तत् तत्त्वं यथार्थं सत्यमित्यर्थः 'तत्त्वं स त्वं कथय भगवन् को हतस्तत्र पूर्वम्' इत्यादौ

१ कृशनं । २ सममात्मजं च ।

इष्टेष्वनिष्टेषु च कार्यवत्सु न रागरोषाश्रयतां प्रपेदे।
शिवं सिषेवेऽव्यवहारलब्धं यज्ञं हि मेने न तथा यथावत् ॥ ३९ ॥
आशावते चाभिगताय सद्यो देयाम्बुभिस्तर्षमचेच्छिदिष्ट।
युद्धादृते वृत्तपरश्वधेन द्विदर्पमुद्वृत्तमबेभिदिष्ट ॥ ४० ॥
एकं विनिन्ये स जुगोप सप्त सप्तैव तत्याज ररक्ष पञ्च।
प्राप त्रिवर्गं बुबुधेऽत्रिवर्गं जज्ञे द्विवर्गं प्रजहौ द्विवर्गम् ॥ ४१ ॥

---

तत्त्वशब्दस्य सत्यार्थकत्वदर्शनात्। जजल्प उक्तवान्। हि यतः सः आत्मनः स्वस्य लज्जयैव हेतुभूतया अतत्त्वं असत्यं सान्त्वं प्रियं, तत्त्वं सत्यं च परुषं कठोरं अप्रियमित्यर्थः वक्तुं न अशकत् न शक्नोति स्म। शकेर्लुङि ऌदित्वादङ्। प्रियमसत्यमप्रियं च सत्यं वदिष्यतोऽस्यात्मैव लज्जां जनयामासेत्यत एवासौ तद्द्वयं नोक्तवानित्यहो निसर्गत एव धर्मानुयायित्वमेतस्येति भावः। एतदेवोक्तं मनुना 'सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्। प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः। इति ॥

(३९) इष्टेष्विति। कार्यवत्सु कार्यं राज्ञः सकाशात्साध्यः कोऽप्यर्थः अस्ति येषां तेषु। राज्ञा किमप्यात्मनः कार्यं साधयितुकामेष्वित्यर्थः इष्टेषु प्रियेषु अनिष्टेष्वप्रियेषु च क्रमेण रागरोषाश्रयतां प्रेमाश्रयतां रोषाश्रयतां च प्रीतत्वं क्रुद्धत्वं चेत्यर्थः। न प्रपेदे प्राप्तवान्। अव्यवहारलब्धं अव्यवहारो विवादस्याभावस्तेन लब्धं तेन प्राप्तं शिवं कल्याणं सिषेवे सेवितवान्। हि यतः स यथावत् यथाशास्त्रं संपादितं यज्ञं तथा अव्यवहारलब्धशिववत् न मेने। यथाशास्त्रमनुष्ठिताद्यज्ञादपि विना व्यवहारं लब्धस्य शिवस्यैव ज्यायस्त्वमाकलयांचकारेति भावः।

(४०) आशेति। च किंच सः अभिगताय आगताय आशावते द्रव्याशायुक्तायार्थिने तं तोषयितुमित्यर्थः। 'क्रियार्थोपपदस्य चे'ति चतुर्थी। सद्यः तत्कालमेव देयाम्बुभिः दानजलैः तर्षमाशां अर्थात्तेषामाशावतामाशां अचेच्छिदिष्ट अत्यन्तं छिन्नवान्। उपस्थितेष्वेव तेषु दानजलं विसृज्य मनोरथान्पूरयामासेत्यर्थः। छिदेर्यङन्ताल्लुङ् यस्य हल इति यलोपः। किंच द्विदर्पं द्विगुणो दर्पो यस्य तं सर्वतो द्विगुणावलेपमित्यर्थः उद्वृत्तं उद्गतो वृत्तात्सद्वृत्तादुद्वृत्तो दुराचारः तं शत्रुमित्यर्थात्। जातावेकवचनम्। युद्धादृते युद्धं विना। 'अन्यारादितरर्ते' इति पञ्चमी। वृत्तपरश्वधेन वृत्तं सदाचार एव परश्वधः कुठारस्तेन करणभूतेन अबेभिदिष्ट अत्यन्तं भिन्नवान्। भिदे रौधादिकाद्यङन्ताल्लुङ्।

(४१) अथास्यैहिक इवामुष्मिकेऽप्यर्थे सुविशुद्धां प्रवृत्तिमुपवर्णयति एकमिति। इह तावन्मन्वादयः शास्त्रकारा विनीतात्मकत्वं राज्ञ आवश्यकं प्राहुः 'विनीतात्मा हि नृपतिर्न विनश्यति कर्हिचित्।' इति 'आत्मानं प्रथमं राजा विनयेनो-

---

१ रागदोषा।

पपादयेत् ।' इति च । 'विनीतात्मत्वं चात्मनो विनयाधानम् । आत्मा च मनः । एतदेवाभिप्रेत्य प्रोक्तं कविना **स** राजा **एकं** मनः **विनिन्ये** विनयं प्रापितवान् । विनययुक्तान्तःकरणो बभूवेत्यर्थः । विनयफलस्यात्मगामित्वादात्मनेपदम् । अस्य राज्यपालने विनयस्यैव पूर्वभावित्वात्प्रथमतो निर्देशः । तत्पूर्वं च सप्त राज्यस्याङ्गानि **जुगोप** पालयामास । गुपू रक्षण इत्यतो लिट् । राज्याङ्गानि च भृगुः प्राह 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । सप्ताङ्गमुच्यते राज्यम् ।' इति । विनयपूर्वमपि राज्यं कुर्वाणस्योपभोगानां सौलभ्याद्व्यसनेष्वासक्तिः स्यात्सा पुनरस्य नासीदित्याह **सप्तैवेति । सप्त** कामजेषु चत्वारि क्रोधजेषु च त्रीणीति सप्त व्यसनानि **तत्याजैव** त्यक्तवानेव । न कदाचिदपि स्वीचकारेत्येवकारोऽभिद्योतयति । तानि च व्यसनानि मनुः प्राह 'पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् । एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे । दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे । क्रोधजेऽपि गणे विद्यात्कष्टमेतत् त्रिकं सदा । सप्तकस्यास्य वर्गस्य सर्वत्रैवानुषङ्गिणः । पूर्वं पूर्वं गुरुतरं विद्याद्व्यसनमात्मवान् ।' इति । कष्टतममप्येतद्व्यसनसप्तकं परित्यक्तवान्का पुनर्वार्ता व्यसनान्तरस्येति भावः । कथं पुनरेतत्सुलभानेकभोगे राज्ये संघटितमित्येतदाह । **ररक्षेति पञ्च** इन्द्रियाणि चक्षुस्त्वक्श्रोत्ररसनघ्राणाख्यानि **ररक्ष** निगृहीतवान् 'पौरव रक्षाविनयम् ।' इत्यादिषु कालिदासादिप्रयोगेषु निग्रहार्थको रक्षतिः संदृष्ट इति । यद्वा **ररक्ष** परित्रातवान् तत्तद्विषयसंपर्कादिति शेषः । इन्द्रियाणि विषयविमुखानि चकारेति भावः । आवश्यकश्च राज्ञामिन्द्रियजय इत्याह मनुः 'इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम् । जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः ।' इति । तत्किं व्यसनपरित्याग एव फलमिन्द्रियनिग्रहस्याहोस्विदन्यदप्येतेन प्राप्तं ? प्राप्तमेवेत्याह **प्रापेति । त्रिवर्गं** धर्मं चार्थं च कामं च **प्राप** लब्धवान् । 'त्रिवर्गो धर्मकामार्थैः' रित्यमरः । यद्वा न केवलमिन्द्रियाणि विजित्य व्यसनपरित्यागमात्रेण तुतोष, किंतर्हि ? त्रिवर्गमप्यासादयामासेत्यभिप्रेत्योक्तं **प्रापत्रिवर्गमिति ।** इन्द्रियजयपूर्वमेव धर्मार्थकामानुपार्जयामासेति वाऽभिप्रायः । त्रिवर्गसमुपार्जनचिन्तायाश्चावश्यकत्वप्रतिपादनमुखेन त्रिवर्गप्राप्तेरावश्यकमुक्तं मनुना 'मध्यन्दिनेर्धरात्रे वा विश्रान्तो विगतक्लमः । चिन्तयेद्धर्मकामार्थान्सार्धं तैरेक एव वा । परस्परविरुद्धानां तेषां च समुपार्जनम् ।' इति । एवं च त्रिवर्गं प्राप्तुकामस्यार्थाद्यर्जने राज्ञ उपायचतुष्टयप्रयोग आवश्यकस्तत्र च संग्रामोऽपीति, किमु प्रादायि करावलम्ब एतेन संग्रामायापीत्याशङ्कायामाह **बुबुधे** इति । **त्रिवर्गं** त्रयाणां सामदानभेदानामेव वर्गं **बुबुधे** ज्ञातवान् त्रयाणामेव प्रयोगेण कार्याणि साधयामासेति प्रयोगस्यैवाभावात्तुरीयमुपायं दण्डाख्यं न ज्ञातवानिति भावः । उक्तं हि मनुना 'साम्ना दानेन भेदेन समस्तैरथवा पृथक् । विजेतुं प्रयतेतारीन्न युद्धेन कदाचन ।' इति । एतेनास्योत्तमराजत्वं द्योत्यते । यद्वा **त्रयाणां** मित्रोदासीनशत्रूणां **वर्गं** बुबुधे ज्ञातवान् । राष्ट्रे कानि तावदात्मनो मित्राणि के रिपवः के चोदासीना इति

विज्ञातवानिति भावः । अविज्ञातेषु ह्येतेषु व्याकुलीभवेद्राष्ट्रं, पारमार्थिकतयाऽविज्ञाताश्च मित्रादयः प्रतारयेयुरपीति । उक्तं च मनुना 'यथैनं नाभिसंदध्युर्मित्रोदासीनशत्रवः । तथा सर्वं संविदध्यादेष सामासिको नयः । ' इति । **यद्वा** त्रिवर्गप्राप्त्युत्तरमवश्यमाचरणीयस्य पारलौकिकस्यैव कर्मणोऽनुष्ठानमतः परमुपवर्ण्यत इति प्रकल्पनीयम् । ततश्च वैराग्योन्मुखीभावाय दुःखत्रयावगममेतस्याह **बुबुध** इति । **त्रिवर्गं** त्रयाणां आधिभौतिकाधिदैविकाध्यात्माख्यानां दुःखानां **वर्गः** संघातस्तं बुबुधे ज्ञातवान् । समारूढोऽप्यभ्युदयं त्रिविधदुःखसत्तां समवागच्छदिति भावः । एतेन निवृत्त्युन्मुखत्वममुष्य चेतसोऽभिव्यज्यते । दुःखत्रयेण हि समाहन्यमानस्य तदुच्छेदके हेतौ जिज्ञासा भवतीति । तदाहुः सांख्याः 'दुःखत्रयाभिघाताज्जिज्ञासा तदभिघातके हेतौ । ' इति । **यद्वा अत्रिवर्गमिति च्छेदः ।** त्रिवर्गभिन्नं मोक्षमित्यर्थः **बुबुधे** धर्मादित्रयमिव मोक्षज्ञानमपि संपादयामासेति भावः । यद्वा **त्रयाणां** धारणाध्यानसमाधीनां **वर्ग**स्त्रिवर्गस्तम् । अष्टौ किल योगस्याङ्गानि यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिसंज्ञानि । तत्र धारणादीनि त्रीण्यन्तरङ्गाणि । तदाह भगवान् पतञ्जलिः 'त्रयमन्तरङ्गं पूर्वेभ्यः' इति । तज्ज्ञानमूलकत्वात्परमात्मज्ञानस्य त्रितयमेतद्विज्ञातवानिति भावः । एतेषां च स्वरूपमुक्तं हैमे 'धारणा तु क्वचिद् ध्येये चित्तस्य स्थिरबन्धनम् । ध्यानं तु विषये तस्मिन्नेकप्रत्ययसंततिः । समाधिस्तु तदेवार्थमात्राभासनरूपकम् । ' इति । यद्वा **त्रयाणां** सत्वरजस्तमसां **वर्गं** कार्यसंघातं हेयोपादेयनिर्णयार्थं बुबुधे । यद्वा प्रकृतिपुरुषविवेकज्ञानस्य मोक्षोपायतया तस्य च प्रकृतिज्ञानमूलतया प्रकृतेश्च चतुर्विंशतौ तत्त्वेष्वनुस्यूततया चतुर्विंशतेश्च तत्त्वानां मध्ये केषांचित्प्रकृतित्वं केषांचिद्विकृतित्वं केषांचित्पुनः प्रकृतिविकृतिरूपत्वमिति त्रयाणामेषामवश्यं विज्ञेयत्वमित्यत आह **बुबुध** इति । **त्रिवर्ग** प्रकृतिर्विकृतिः प्रकृतिविकृतिरित्येतेषां **त्रयाणां वर्गः** संघातस्त्रिवर्गस्तं बुबुधे । एवंहि प्रकृतौ विज्ञातायां परिशेषात्पुरुषविज्ञानमर्थादेव संपद्यत इति । त्रिवर्गश्चायमुक्त ईश्वरकृष्णेन 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः । ' इति । एवं च प्रकृतिं विज्ञाय प्रकृतिपुरुषयोर्ज्ञानं संपादयामासेति स्फुटमाह **जज्ञ** इति **द्विवर्गं** द्वयोः प्रकृतिपुरुषयो**र्वर्गं जज्ञे** जानीतेस्म । यद्वा **द्विवर्गं** द्वन्द्वानां सुखदुःखादीनां **वर्गं जज्ञे** सहनीयतया ज्ञातवानित्यर्थः । यद्वा द्वयोः सदसतो**र्वर्गो द्विवर्ग**स्तं जज्ञे । एवं च **परमार्थे** प्रसक्तः, **द्विवर्गं प्रजहौ, द्वयोर्वर्गो** द्वैतमित्यर्थः तं **प्रजहौ** त्यक्तवान् । भेदबुद्धिं परित्यज्य सर्वत्र समदर्शनः संवृत्त इति भावः । यद्वा **द्वयोः** कामक्रोधयो**र्वर्गः** समूहस्तं प्रजहौ । अवश्यं ह्येतद्द्वयं परित्याज्यं भव्यमभिलषता पुरुषेणेति । तदाह भगवान् 'काम एष क्रोध एष रजोगुणसमुद्भवः । महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् । ' इति । यद्वा **द्वितीयो वर्गो** द्विवर्गः धर्मार्थकाममोक्षेष्वर्थ इत्यर्थः । तं **प्रजहौ** त्यक्तवान् दत्तवानित्यर्थः । त्यागो हि दानमर्थस्येति । दृश्यते च संख्याश-

**कृतागसोऽपि प्रतिपद्य वध्यान्नाजीघनन्नापि रुषा ददर्श ।**
**बबन्ध सान्त्वेन फलेन चैतांस्त्यागोऽपि तेषामनपायदुष्टः[1] ॥ ४२ ॥**

**आर्षाण्यहासीत्परमव्रतानि वैराण्यहासीच्चिरसंभृतानि ।**
**यशांसि चापद्गुणगन्धवन्ति रजांस्यहासीन्मलिनीकराणि ॥ ४३ ॥**

---

व्दानां पूरणार्थकत्वमपि 'त्रिभागशेषासु निशासु' 'त्रिविष्टप' मित्यादौ । पूरणार्थकप्रत्ययस्तु वृत्तौ गतार्थत्वान्न प्रयुज्यत इति भानुदीक्षिताः । मल्लीनाथोऽप्येवम्। इति कृतं पल्लवितेन । आस्तां सूक्ष्मधियामेषा विवृतिः प्रमदावहा । **संक्षेपतस्तु** च्छात्राणां कृतेऽर्थोऽयं निरूप्यते—स **एकं** मनो विनिन्ये विनययुक्तं कृतवान् **सप्त** राज्याङ्गानि जुगोप ररक्ष । **सप्त** व्यसनानि तत्याज त्यक्तवान् । **पञ्च** इन्द्रियाणि ररक्ष विषयासंगाद्वारयामास । त्रिवर्गं धर्मार्थकामरूपं प्राप लब्धवान् । **अत्रिवर्गं** मोक्षं च बुबुधे ज्ञातवान् । **द्विवर्गं** द्वयोः सदसतोर्वर्गं जज्ञे ज्ञातवान् । **द्विवर्गं** कामक्रोधरूपं प्रजहौ प्रकर्षेण त्यक्तवानिति । इन्द्रवज्रावृत्तम् ।

( ४२ ) कृतेति । कृतागसः कृतं आगः अपराधो यैस्तथाभूतानपि वध्यान् वधार्हान् । दण्डादिभ्यो यदिति तदर्हतीत्यर्थे यत् । प्रतिपद्य ज्ञात्वाऽपि न अजीघनत् न घातयामास हन्तेर्ण्यन्ताल्लुङ् । अपि किंच रुषा क्रोधेन न ददर्श न दृष्टवान् । च किंच एतान् अपराधिनः सान्त्वेन साम्ना करणभूतेन फलेन अपराधपरिणामेन बबन्ध योजयामास । सामपूर्वमेव दण्डयामास । न परुषं दण्डं प्रयुक्तवानिति भावः । तेषां अपराधिनां त्यागो निर्वासनरूपं दूरीकरणमपि अनपायदुष्टः अपायेन हान्या दुष्टो न भवति तथाभूतः आसीदिति शेषः । वधार्हानपि सौम्यं दण्डयामास । देशतो निर्वासितानामप्येषां संपदादिकं नानेनापहृतमिति भावः ।

( ४३ ) आर्षाणीति । आर्षाणि ऋषीणामिमानि । तस्येदमित्यण् । ऋषिसंबन्धानीत्यर्थः । अव्रतानि अनाचरणीयानीत्यर्थः । परं केवलं अहासीत् त्यक्तवान् । यद्यदृषिभिर्नाचर्यते तत्तत्स्वयं नाचचारेत्यर्थः । मुनिवन्नियमनिष्ठो बभूवेति भावः । चिरसंभृतानि चिरादुपचितानि वैराणि विद्वेषान् अहासीत् त्यक्तवान् । चिरसंभृतान्यपि वैराणि तत्याज का कथाऽन्येषामिति भावः । गुणगन्धवन्ति गुणानां दयादीनां गन्धः सौरभ्यं तदस्ति येषु तथाभूतानि । सुगुणविभूषितानीत्यर्थः । यशांसि कीर्तीः आपत् प्राप्तवान् । आप्नोतेर्लुङ् । मलिनीकराणि मलिनत्वजनकानि रजांसि रजोगुणमयानि कर्माणि अहासीत् त्यक्तवान् । सर्वत्रापि जहातेरेव लुङ् । 'रजः क्लीबं गुणान्तरे' इति मेदिनी । मलिनीकरणसाधर्म्याच्च रजोगुणो रजोधूलिरिवेतिप्रतीयते । दुरुद्धरः पुनरनवीकृतत्वाख्योऽत्र दोषः ।

---

१ अनपायदृष्टः ।

न चाजिहीर्षीद्बलिमप्रवृत्तं न चाचिकीर्षीत्परवस्त्वभिध्याम्।
न चाविवक्षीद्द्विषतामधर्मं न चादिधक्षीद्धृदयेन मन्युम् ॥ ४४ ॥
तस्मिंस्तथा भूमिपतौ प्रवृत्ते भृत्याश्च पौराश्च तथैव चेरुः।
शमात्मके चेतसि विप्रसन्ने प्रयुक्तयोगस्य यथेन्द्रियाणि ॥ ४५ ॥
काले ततश्चारुपयोधरायां यशोधरायां सुयशोधरायाम्।
शौद्धोदने राहुसपत्नवक्त्रो जज्ञे सुतो राहुल एव नाम्ना ॥ ४६ ॥
अथेष्टपुत्रः परमप्रतीतः कुलस्य वृद्धिं प्रति भूमिपालः।
यथैव पुत्रप्रसवे ननन्द तथैव पौत्रप्रसवे ननन्द ॥ ४७ ॥

---

( ४४ ) नेति। च किंच अप्रवृत्तं प्राचीनकालतः प्रभृति अप्रचरितं बलिं करं नवं करमित्यर्थः न आजिहीर्षीत् आहर्तुं (ग्रहीतुं) इष्टवान्। हरतेः सन्नन्ताल्लुङ्। च किंच परवस्त्वभिध्यां परेषामन्येषां यानि वस्तूनि तेषामभिध्यामपहारेच्छां न अचिकीर्षीत् कर्तुमियेष। करोतेः सन्नन्ताल्लुङ्। 'अभिध्या तु परस्य विषये स्पृहा' इत्यमरः (परस्य विषये चौर्यादिना स्पृहा इति व्याख्यासुधा)। च किंच द्विषतां शत्रूणाम्। शेषे षष्ठी। शत्रुभ्योऽपीत्यर्थः। अधर्मं अन्यायं न अविवक्षीत् वक्तुमिच्छति स्म। शत्रुभ्योऽपि न्यायभिन्नं न वक्तुमिष्टवान्किं पुनरन्येभ्य इति भावः। च हृदयेन मनसा मन्युं क्रोधं न अदिधक्षीत् दग्धुं प्रज्वालयितुमिति यावत् न इयेष क्रोधाभिवृद्धिं मनसा नेष्टवानित्यर्थः। 'मन्युर्दैन्ये क्रतौ क्रुधि' त्यमरः।

( ४५ ) तस्मिन्निति। तस्मिन् भूमिपतौ राज्ञि तथा तेन प्रकारेण प्रवृत्ते आरब्धाचरणे सति भृत्याः पोष्याः सेवकादयः पौराः पुरवासिनो लोकाश्च तथैव चेरुः आचरणं कृतवन्तः। यथा प्रयुक्तयोगस्य प्रयुक्तः प्रयोगविषयीकृतः योगः चित्तवृत्तिनिरोधरूपो येन तस्य योगिनः चेतसि मनसि शमात्मके शमो विषयवैराग्यमेव आत्मा स्वभावो यस्य तथाभूते विप्रसन्ने विशेषेण प्रसादं प्राप्ते च सति यथा इन्द्रियाणि ( मनोनुरूपमेव चरन्ति तद्वदित्यर्थः। ) नियन्तृस्वभावानुकारित्वान्नियम्यानामिति भावः।

( ४६ ) काल इति। ततः काले योग्ये समये सुयशोधरायां शोभनस्य यशसो भूमिभूतायां चारुपयोधरायां मनोहरस्तन्यां यशोधरायां नाम बुद्धस्य भार्यायाम्। शौद्धोदनेः शुद्धोदनपुत्रात् बुद्धात् राहुसपत्नवक्त्रः राहोः सपत्नः शत्रुश्चन्द्रः तद्वन्मुखं यस्य तथाभूतः नाम्ना राहुल एव राहुलनामक एव सुतः पुत्रः जज्ञे उत्पन्नः। जनेर्लिट्। नाम्नेति प्रकृत्यादिभ्य इति तृतीया।

( ४७ ) अथेति। अथ पौत्रजन्मानन्तरं इष्टपुत्रः इष्टः प्रियः पुत्रो यस्य तथाभूतः। 'इष्टमाशंसितेऽपि स्यात्पूजिते प्रेयसि त्रिषु।' इति मेदिनी। भूमिपालः

---

१ समात्मकै।

**पौत्रस्य मे पुत्रगतो ममैव स्नेहः कथं स्यादिति जातहर्षः ।**
**काले स तं तं विधिमाललम्बे पुत्रप्रियः स्वर्गमिवारुरुक्षन् ॥ ४८॥**

**स्थित्वा पथि प्राथमकल्पिकानां राजर्षभाणां यशसान्वितानाम् ।**
**शुल्कान्[1]यमुक्त्वापि तपांस्यतप्त यज्ञैश्च[2] हिंसारहितैरयष्ट ॥ ४९ ॥**

**अजा[3]ज्वलिष्टाथ स पुण्यकर्मा नृपश्रिया चैव तपःश्रिया च ।**
**कुलेन वृत्तेन धिया च दीप्तस्तेजः सहस्रांशुरिवोत्सिसृक्षुः ॥ ५०॥**

---

राजा शुद्धोदनः कुलस्य वंशस्य वृद्धिंप्रति वृद्धिविषये परमप्रतीतः अत्यन्तं विश्वस्तः । यथैव पुत्रप्रसवे पुत्रजन्मनि ननन्द आनन्दं प्राप्तवान् तथैव पौत्रप्रसवे पुत्रपुत्रस्य जन्मनि ननन्द आनन्दं लेभे । प्रतीत इति प्रतिपूर्वादेतेर्विश्वासार्थकान्निष्ठा ।

( ४८ ) पौत्रस्येति । पुत्रप्रियः स्वर्गं सुखविशेषं आरुरुक्षन् आरोढुमिच्छन् इव जातहर्षः संजातानन्दः स राजा शुद्धोदनः ममैव मत्कर्तृक एव पौत्रस्य पुत्रपुत्रसंबन्धी स्नेहः प्रेमा मे पुत्रगतः पुत्रे विद्यमानः कथं केनापि प्रकारेण स्यात् भवतु इति हेतोः काले योग्ये समये तं तं तत्तत्प्रकारं विधिं पुत्रे पुत्रविषयकस्नेहजननानुकूलं आललम्बे आश्रितवान् कृतवानित्यर्थः । पुत्रस्य पुत्रे यादृशो मे स्नेहस्तादृश एव मत्पुत्रस्यापि कथमपि भवत्वित्याशयानः स राजा स्वाभिप्रायसाधनाय तं तं विधिं चकारेति भावः । पौत्रस्येति शेषे ममैवेति च कर्तरि षष्ठी । यथा स्वर्गमारोढुकामः पुरुष आत्मनः स्नेहास्पदीभूतेषु पुत्रस्य प्रेम भवत्वित्यभिप्रेत्य तथा कर्तुं प्रयतते तथैवायं चकारेति वा ।

( ४९ ) स्थित्वेति । प्राथमकल्पिकानां प्रथमे पूर्वे कल्पे कालविशेषे भवाः प्राथमकल्पिकास्तेषां यशसा आन्वितानां युक्तानां राजर्षभाणां नृपश्रेष्ठानाम् । 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । * * * श्रेष्ठार्थवाचकाः ।' इत्यमरः । पथि सरणौ स्थित्वा तैरालम्बितां सरणिमालम्ब्येत्यर्थः । स राजेति संबध्यते । शुल्कानि राजग्राह्यान् करान् अमुक्त्वा अपरित्यज्य । राज्यमपि कुर्वन्नित्यर्थः । तपांसि अतप्त कृतवान् । तपतेर्दैवादिकाल्लुङ् । च किंच हिंसारहितैः पशुहिंसाशून्यैः यज्ञैः अयष्ट देवानाराधयामास । यजतेर्लुङ् । क्रियाफलस्य कर्तृगामित्वादात्मने पदम् ।

( ५० ) अजाज्वलिष्टेति । कुलेन सद्वंशेन वृत्तेन सदाचारितेन धिया ज्ञानेन च दीप्तः प्रकाशितः पुण्यकर्मा स शुद्धोदनः नृपश्रिया राजलक्ष्म्या च तपःश्रिया तपःसंपदा चैव करणभूतया, तेजः कर्म उत्सिसृक्षुः उत्स्रष्टुं जनयितुमिच्छुः सहस्रांशुः सहस्रकिरणः सूर्य इव अजाज्वलिष्ट अतिशयेन दीप्तिं प्राप । ज्वलतेर्यङन्ताल्लुङ् । आदित एव कुलादिभिर्दीप्यमानस्य नृपश्रिया तपःश्रिया चातिमात्रं दीप्तिरासीदिति भावः ।

---

१ शुक्लान्य । २ यज्ञे च । ३ अजज्वलिष्ट ।

स्वायम्भुवं चार्चिकमर्चयित्वा जजाप पुत्रस्थितये स्थितश्रीः।
चकार कर्माणि च दुष्कराणि प्रजाः सिसृक्षुः क इवादिकाले ॥५१॥
तत्याज शस्त्रं विममर्श शास्त्रं शमं सिषेवे नियमं विषेहे।
वशीव कञ्चिद्विषयं न भेजे पितेव सर्वान्विषयान्ददर्श ॥५२॥
बभार राज्यं स हि पुत्रहेतोः पुत्रं कुलार्थं यशसे कुलं तु।
स्वर्गाय शब्दं दिवमात्महेतोर्धर्मार्थमात्मस्थितिमाचकाङ्क्ष ॥ ५३॥

(५१) स्वायम्भुवमिति। च किंच स्थितश्रीः स्थिता प्रतिष्ठां प्राप्ता स्थिरीभूतेत्यर्थः श्रीर्लक्ष्मीर्यस्य तथाभूतः सः पुत्रस्थितये पुत्रप्रतिष्ठार्थं पुत्रस्य गृहेऽवस्थानार्थं वा स्वायम्भुवं स्वयम्भुवो ब्रह्मण इदं स्वायम्भुवं आर्चिकं बह्वीः प्रतिमाः कर्मभूताः। 'समूहवच्च बहुष्वि'ति स्वार्थे ठक् प्रकृतिलिङ्गातिदेशश्च शब्दस्वाभाव्यात्। कुटीरादिवत्। 'अर्चा पूजाप्रतिमयोः' इति मेदिनी। अर्चयित्वा पूजयित्वा जजाप जपं कृतवान्। च किंच आदिकाले सृष्टेरादिसमये प्रजाः जनान् सिसृक्षुः स्रष्टुमिच्छुः को ब्रह्मेव दुष्कराणि दुःखेन कर्तुं शक्यानि कर्माणि चकार। अतिदुर्घटं तपआदिकं चकारेत्यर्थः। ब्रह्मापि हि घोरं तपश्चचारेति। तदाहुः पौराणिकाः 'तपश्चचार प्रथममरमराणां पितामहः।' इति। 'को ब्रह्मणि समीरात्मे'ति मेदिनी।

(५२) तत्याजेति। शस्त्रं तत्याज त्यक्तवान्। शास्त्रं वेदान्तादि विममर्श विचारितवान्। मृशेर्लिट्। नियमं इन्द्रियाणां निग्रहं विषेहे सोढवान्। सहतेर्लिट्। नात्र नियमशब्दस्य शौचसन्तोषाद्यर्थकता। तेषां विषहणोक्तेरपूर्वत्वाभावात्। वशी जितेन्द्रियः संयमीव कंचिद्विषयं न भेजे न सेवितवान्। सर्वान्स्त्रीप्रभृतीन् विषयान् पिता इव ददर्श दृष्टवान्। न तूपभोग्यबुद्ध्येति भावः। यथा पिताऽऽत्मनः पुत्रान्पश्यत्येवमसौ विषयान्ददर्शेत्यर्थः।

(५३) बभारेति। सः शुद्धोदनः पुत्रहेतोः पुत्रार्थं राज्यं राष्ट्रं बभार पुपोष पालयामासेत्यर्थः। डुभृञ् धारणपोषणयोरित्यतो लिट्। राज्यं च राष्ट्रमिति शब्दकल्पद्रुमः। राज्यं राज्ञः कर्म वा बभार आत्मनि धृतवान्। चकारेति यावत्। पुत्रं कुलार्थं वंशार्थं बभार पुपोष। आचकाङ्क्षेत्युत्तरेण वा संबन्धः। कुलं तु वंशं पुनः यशसे कीर्त्यर्थं आचकाङ्क्ष। शब्दं यशश्च स्वर्गाय स्वर्गप्राप्त्यर्थं आचकाङ्क्ष। यशस्विन एव हि स्वर्गं प्रयान्तीति। स्वर्गं च आत्महेतोः आत्मनः कृते आचकाङ्क्ष कामयामास। आत्मस्थितिं आत्मनः अस्तित्वं च धर्मार्थं आचकाङ्क्ष इष्टवान्। न पुनरन्यार्थमिति भावः। 'शब्दोऽक्षरे यशोगीत्योः' इति हैमः। अत्र पूर्वं पूर्वं राज्यादि प्रति परस्य परस्य विशेषणतया स्थापनादेकावल्यलङ्कारः। तदुक्तं विश्वनाथेन 'पूर्वं पूर्वं प्रति विशेषणत्वेन परम्परम्। स्थाप्यतेऽपोह्यते वा चेत्स्यात्तदैकावली द्विधा।' इति। पुत्रहेतोरित्यादीनां नान्यहेतोरित्यर्थकतयाऽन्यव्यपोहनाच्च परिसंख्यापि। तदुक्तं तेनैव 'प्रश्नादप्रश्नतो वापि कथिताद्वस्तुनो भवेत्। तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा। परिसंख्ये' ति उभयोश्चैकाश्रयानुप्रवेशेन संकरः।

एवं स धर्मं विविधं चकार सद्भिर्निपातं श्रुतितश्च सिद्धम्।
दृष्ट्वा कथं पुत्रमुखं सुतो मे वनं न यायादिति नाथमानः ॥५४॥

रिरक्षिषन्तः श्रियमात्मसंस्थां रक्षन्ति पुत्रान् भुवि भूमिपालाः।
पुत्रं नरेन्द्रः स तु धर्मकामो ररक्ष धर्माद्विषयेष्वमुञ्चत् ॥ ५५ ॥

वनमनुपमसत्त्वा बोधिसत्त्वास्तु सर्वे
विषयसुखरसज्ञा जग्मुरुत्पन्नपुत्राः।
अत उपचितकर्मा रूढमूलेऽपि हेतौ
स रतिमुपसिषेवे बोधिमापन्न यावत् ॥ ५६ ॥

इति श्रीबुद्धचरिते महाकाव्येऽन्तःपुरविहारो नाम
द्वितीयः सर्गः

---

( ५४ ) एवमिति। मे सुतः पुत्रः पुत्रमुखं दृष्ट्वा पुत्रमुखदर्शनोत्तरं कथं केनापि प्रकारेण वनं न यायात् न गम्यात्। यातेराशिषि लिङ्। तपश्चरणार्थमिति भावः। इति नाथमानः आशंसमानः। 'आशिषि नाथ इति वाच्यम्' इत्यात्मनेपदे शानच्। प्रजोत्पत्त्यर्थमेव हि दारोपगम इति समुत्पान्नायां तस्यां प्रव्रज्यास्वीकाराय वनं गच्छेत्तनय इति तथा मा भवत्वित्यभिललाष शुद्धोदनः। तथाभूतश्च स शुद्धोदनः एवमनेन प्रकारेण सद्भिः रागद्वेषशून्यैः साधुभिः निपातं नितरामनुपालितं श्रुतितो वेदतः सिद्धं च विविधं नानाप्रकारं धर्मं चकार कृतवान्। निपातमिति पातेर्निष्ठा।

( ५५ ) रिरक्षिषन्त इति। भूवि भूमौ भूमिपाला राजानः कर्तारः आत्मसंस्थां आत्मनि स्वस्मिन् संस्था स्थितिर्यस्यास्तां श्रियं लक्ष्मीं रिरक्षिषन्तः रक्षितुमिच्छन्तः। रक्षतेः सन्नन्ताच्छता हेतौ। श्रीरक्षणेच्छा हि पुत्ररक्षणे हेतुरिति। पुत्रान् रक्षन्ति। विश्वजनीनोऽयं नियम इति भावः। शुद्धोदनस्य पुनरेतद्विपरितमेवेत्याह। पुत्रमिति। तु किन्तु स नरेन्द्रो राजा शुद्धोदनः धर्मकामः धर्मेच्छुः सन् पुत्रं धर्मात् ररक्ष वारयामास। रक्षतेर्वारणार्थकत्वाद्वारणार्थानामित्यपादानसंज्ञायां पञ्चमी। विषयेषु स्त्रीप्रभृतिषूपभोग्येषु धर्मविप्रतीपेष्विति भावः। अमुञ्चत् त्यक्तवान्। एतेन हि आत्मनि विद्यमानाया धर्मश्रियः पालनार्थं धर्म एव पुत्रो विनियोक्तव्यः किन्तु तस्मादयं वारितो विषयेषु च निक्षिप्त इति पूर्वनृपचरितविरुद्धमेतदिति भावः।

( ५६ ) ननु कुतः पुत्रमुखदर्शनोत्तरमेव वनगमनं कुतश्च नैतत्ततः प्रागेवेत्यत्राह **वनमिति**। अनुपमसत्त्वाः अनुपमं सत्त्वं गुणविशेषः साधुत्वं वा येषां ते सर्वे बोधिसत्त्वाः बोधिः समाधिविशेष एव सत्त्वं बलं येषां ते बुद्धाः कर्तारः तु। ते हि 'विपश्यी शिखी विश्वभूः क्रकुच्छन्दश्च काञ्चनः। काश्यपश्च सप्तमस्तु शाक्यसिंह' इति प्रोक्ता हेमचन्द्रेण। तत्र पूर्वे षट् सप्तमश्चायं शुद्धोदनपुत्रः।

विषयसुखरसज्ञाः विषयाणां सुखस्य रसं जानन्ति तथाभूताः उत्पन्नपुत्राश्च सन्तः वनं जग्मुः प्रव्रज्यामङ्गीकृत्य गतवन्तः। अतो हेतोः उपचितकर्मा उपचितं अभिवृद्धं कर्म वैराग्यजनकं सुकृतं यस्य तथाभूतः स शुद्धोदनपुत्रः कर्ता हेतौ प्रव्रज्यास्वीकारविषय उद्देशे रूढमूले दृढीभूते सत्यपि यावत् बोधिं समाधिं न आपत् न प्राप्तवान्। पुत्रोत्पत्त्यनन्तरमेव बोधिः प्राप्येति पूर्वबुद्धाचाराद्यावत्तत्प्राप्तिसाधनं पुत्रं न प्रापत्तावदित्यर्थः। रतिं भार्योपभोगं उपसिषेवे सेवितवान्। मालिनीवृत्तम्। 'ननमयययुतेयं मालिनी भोगिलोकैः' इतिलक्षणात्। 'बोधिः समादिभेदे स्या' दिति विश्वः।

इति श्रीमत्पण्डितराजवंशावतंसवैयाकरणशेखरश्रीमत्कान्ताचार्यसूरिणां छात्रेण श्रीमत्सदाशिवबुधेन्द्रसूनुना राशिवडेकरेण श्रीअप्पाशर्मविद्यावाचस्पति-विद्यालङ्कारमहोपदेशकेन विनिर्मितायां बालबोधिन्याख्यायां बुद्धचरितव्याख्यायां द्वितीयः सर्गः ॥

॥ श्रीसदाशिवार्पणमस्तु ॥

---

## श्रीशिवः शरणम्।

# अथ बुद्धचरिते तृतीयः सर्गः

ततः कदाचिन्मृदुशाद्वलानि पुंस्कोकिलोन्नादितपादपानि।
शुश्राव पद्माकरमण्डितानि शीते निबद्धानि स काननानि ॥ १ ॥
श्रुत्वा ततः स्त्रीजनवल्लभानां मनोज्ञभावं पुरकाननानाम्।
बहिः प्रयाणाय चकार बुद्धिमन्तर्गृहे नाग इवावरुद्धः ॥ २ ॥

---

( १ ) अथ बुद्धस्य संवेगप्राप्तिमुपवर्णयितुकामस्तदङ्गतया वनप्रयाणवर्णनं प्रस्तौति। तत इति। ततः पुत्रोत्पत्त्यनन्तरं कदाचित् स बुद्धः कर्ता शीते शीतप्रदेशे निबद्धानि कृतानि मृदुशाद्वलानि मृदूनि शाद्वलानि हरिततृणाच्छन्ना भूमयो येषु तथाभूतानि। ( शादो बालतृणमस्ति यत्र तच्छाद्वलं नडशादादिति ड्वलच् ) पुंस्कोकिलोन्नादितपादपानि पुंस्कोकिलैः पुंभिः कोकिलैः उन्नादिताः अतिशयेन ध्वनियुक्ततां नीताः पादपा वृक्षा येषु तथाभूतानि। पुंस्कोकिलेति पुमः खय्यमपर इति रौ संपुंकानामिति सः। पद्माकरमण्डितानि पद्माकरैस्तडागैः मण्डितानि विभूषितानि काननानि शुश्राव श्रुतवान्। एवंविधान्यरण्यानि विद्यन्त इति शुश्रावेति भावः। उपजातिर्वृत्तम्। विशिष्टं तु तत्र तत्र वक्ष्यते।

( २ ) श्रुत्वेति। अन्तर्गृहे अभ्यन्तरे गृहे अवरुद्धः निरुद्धः नागो गज इव वर्तमानः स बुद्धः ततः स्त्रीजनवल्लभानां स्त्रीसमूहस्य प्रियाणां पुरकाननानां नगर-

ततो नृपस्तस्य निशम्य भावं पुत्राभिधानस्य मनोरथस्य ।
स्नेहस्य लक्ष्म्या वयसश्च योग्यामाज्ञापयामास विहारयात्राम् ॥३॥
निवारयामास च राजमार्गे संपातमार्तस्य पृथग्जनस्य ।
मा भूत् कुमारः सुकुमारचित्तः संविग्नचेता इति मन्यमानः ॥४॥
प्रत्यङ्गहीनान्विकलेन्द्रियांश्च जीर्णातुरादीन्कृपणांश्च भिक्षून् ।
ततः समुत्सार्य परेण साम्ना शोभां परां राजपथस्य चक्रुः ॥५॥

---

संबन्धिनामरण्यानां मनोज्ञभावं मनोहरतां श्रुत्वा । 'मनोज्ञं मञ्जु मञ्जुलम् ।' इति चारुपर्यायेष्वमरः । बहिःप्रयाणाय गृहाद्बहिर्गमनार्थं बुद्धिं चकार । वनगमनाय गृहाद्बहिः प्रयातव्यमिति विचारयामासेति भावः ।

(३) ततं इति । ततः तस्य प्रयाणविचारोत्तरं नृपः राजा शुद्धोदनः तस्य पुत्राभिधानस्य पुत्रसंज्ञस्य मनोरथस्य आत्मनोऽभिलाषस्य । प्रेष्ठतया मनोरथनिर्विशेषस्य पुत्रस्येत्यर्थः । भावं वनगमनाभिप्रायं निशम्य श्रुत्वा । स्नेहस्य पुत्रविषयकस्य प्रेम्णः लक्ष्म्याः स्वीयसंपदः वयसः पुत्रवयसश्च योग्यां विहारयात्रां विहारार्थं वने क्रीडार्थं यात्रां गमनं आज्ञापयामास । स्नेहाद्यनुरूपेण वैभवादिना समनुगतः कुमारो यात्रां वितनोत्वित्याज्ञापयामासेति भावः ।

(४) निवारयामासेति । च किंच सुकुमारचित्तः कुमारो बुद्धः संविग्नचेता संविग्नं विचलितं चेतो यस्य तथाभूतः मा भूत् इति मन्यमानः स राजा राजमार्गे मार्गाणां राजा राजमार्गः । राजदन्तादित्वात्साधुः । प्रशस्तो मार्ग इत्यर्थः । तस्मिन् । आर्तस्य पीडितस्य पृथग्जनस्य नीचजातेश्च (पृथक्कार्योजनः पृथग्जनः) संपातं संक्रमं निवारयामास वारितवान् । ण्यन्ताण्णिच् । 'मूर्खनीचौ पृथग्जनौ' इत्यमरः ।

(५) प्रत्यङ्गेति । ततो राजकृतनिवारणाज्ञानन्तरं राजपुरुषा इति शेषः । प्रत्यङ्गहीनान् कर्णनासादिभिः शून्यान् विकलेन्द्रियान् विकलानि स्वभावत एव हीनानि इन्द्रियाणि चक्षुरादीनि येषां तान् । इन्द्रियाणि च न चक्षुर्गोलकादीनि किन्तु तारकाद्यन्तर्वर्तीनि ज्ञानसाधनानि । प्रत्यङ्गं कर्णनासाक्षिलिङ्गमङ्गं करादिकम्' इति शब्दचन्द्रिका । जीर्णातुरादीन् जीर्णा वृद्धा आतुराः पीडिताश्चादयो येषु तान् । 'जीर्णो जीनो जरन्नपि' इति वृद्धपर्यायेष्वमरः । कृपणान् दीनान् । भिक्षून् यतीन् । ते हि दृष्ट्वा भिक्षुत्वाङ्गीकारनिदानजिज्ञासामुत्पादयेयुरिति । परेण आत्यन्तिकेन साम्ना मधुरवचनेन समुत्सार्य दूरीकृत्य राजपथस्य राजमार्गस्य । ऋक्पूरब्धूःपथामित्यः । परां शोभां चक्रुः ।

---

१ निवर्तयामास । २ सुकुमारगर्भः । ३ इव । ४ परा ।

ततः कृते श्रीमति राजमार्गे श्रीमान् विनीतानुचरः कुमारः।
प्रासादपृष्ठादवतीर्य काले कृताभ्यनुज्ञो नृपमभ्यगच्छत् ॥ ६॥
अथो नरेन्द्रः सुतमु[1]द्गताश्रुः शिरस्युपाघ्राय चिरं निरीक्ष्य।
गच्छेति चाज्ञापयति स्म वाचा स्नेहात्तु[2] नैनं मनसा मुमोच ॥७॥
ततः स जाम्बूनदभा[3]ण्डभृद्भिर्युक्तं चतुर्भिर्निभृतैस्तुरङ्गैः।
अक्लीबवि[4]द्युच्छुचिरश्मिधारं हिरण्मयं स्यन्दनमारुरोह ॥८॥
ततः प्रकीर्णोज्ज्वलपुष्पजालं विषक्तमाल्यं प्रचलत्पताकम्।
मार्गं प्रपेदे सदृशानुयात्रश्चन्द्रः सनक्षत्र इवान्तरीक्षम् ॥९॥

---

(६) तत इति। राजमार्गे श्रीमति शोभासम्पन्ने कृते सति। तत्राधिकृतैरिति शेषः। ततः श्रीमान् शोभाशाली विनीतानुचरः विनीता विनयशालिनोऽनुचरा अनुयायिनो यस्य तथाभूतः कुमारः काले योग्ये समये प्रासादपृष्ठात् राजमन्दिरपृष्ठात् अवरुह्य अधः समागत्य, कृताभ्यानुज्ञः कृता दत्तेत्यर्थः अभ्यनुज्ञा अनुमतिर्यस्मै तथाभूतः। राज्ञेति शेषः। नृपं शुद्धोदनं अभ्यगच्छत् उपजगाम।

(७) अथो इति। अथो अनन्तरं उद्गताश्रुः पुत्रवियोगदुःखेन प्रवृत्ताश्रुः नरेन्द्रः शुद्धोदनः सुतं शिरसि उपाघ्राय घ्रात्वा। एष खलु मङ्गलाशंसिनां प्राचामाचारो यद्वत्सलाः पुत्रादीन् शिरस्युपाजिघ्रन्तिस्मेति। चिरं निरीक्ष्य दृष्ट्वा। वियोगस्य दुःसहत्वादिति भावः। वाचा करणभूतया गच्छ इति आज्ञापयामास। चकारः पादपूर्त्यर्थः। तु किन्तु स्नेहात् हेतुभूतात् मनसा एनं न मुमोच। प्रेमवशान्मनसैनं चिन्तयन्नेवासीदिति भावः।

(८) तत इति। ततो नृपाज्ञानन्तरं स बुद्धः जाम्बूनदभाण्डभृद्भिः जाम्बूनदस्य सुवर्णस्य भाण्डानि अलङ्कारान् बिभ्रति धारयन्ति तथाभूतैः। निभृतैः विनीतैः। 'निभृतो विनीत' इति कल्पद्रुमः। चतुर्भिः तुरगैः अश्वैः युक्तं। अक्लीबविद्युच्छुचिरश्मिजालं अक्लीबा वीर्यवत्यो विद्युत इव शुचयो रश्मयः प्रग्रहाः (अश्वनियमनरज्जवः) तान् धरति इति तथाभूतं। 'कर्मण्यण्' इत्यण्। हिरण्मयं सौवर्णं स्यन्दनं रथं आरुरोह आरूढवान्।

(९) तत इति। ततः स्यन्दनारोहणोत्तरं सनक्षत्रो नक्षत्रैः सह वर्तमानः चन्द्रः अन्तरीक्षं इव सदृशानुयात्रः सदृशा योग्या अनुयात्रा अनुयायिनो यस्य तथाभूतः सः बुद्धः कर्ता। प्रकीर्णोज्ज्वलपुष्पजालं प्रकीर्णानि तत इतः क्षिप्तानि उज्ज्वलानि पुष्पाणां जालानि यत्र तम्। विषक्तमाल्यं विषक्तानि विशेषेण सक्तानि लग्नानि संयोजितानीति यावत् माल्यानि यत्र तथाविधम्। प्रचलत्पताकं च मार्गं प्रपेदे प्राप्तवान्। पद्यतेर्लिट्।

---

१ मागताश्रुः। २ स्नेहान्न चैनं। ३ भासभृद्भि। ४ विध्यच्छुचि।

कौतूहलात्स्फीततरैश्च नेत्रैर्नीलोत्पलाभैरवकीर्यमाणः[1]।
शनैः शनै राजपथं जगाहे पौरैः समन्तादभिवीक्षमाणैः[2] ॥ १० ॥
तं तुष्टुवुः सौम्यगुणेन केचिद्ववन्दिरे दीप्ततया तथान्ये।
सौमुख्यतस्तु श्रियमस्य केचिद्वैपुल्यमाशंसिषुरायुषश्च ॥ ११ ॥
निःसृत्य कुब्जाश्च महाकुलेभ्यो व्यूहाश्च कैरातकवामनानाम्।
नार्यः कृशेभ्यश्च निवेशनेभ्यो देवाधिनाथध्वजवत्[3]प्रणेमुः ॥ १२ ॥
ततः कुमारः खलु गच्छतीति श्रुत्वा स्त्रियः प्रेष्यजनात्प्रवृत्तिम्।
दिदृक्षया हर्म्यतलानि जग्मुर्जनेन मान्येन कृताभ्यनुज्ञाः ॥ १३ ॥

(१०) कौतूहलादिति। समन्तात् विद्यमानैः अभिवीक्षमाणैः पश्यद्भिः पौरैः पुरवासिभिर्लोकैः कर्तृभिः कौतूहलात् कौतुकेन स्फीततरैः अतिशयेन विकसितैः। स्फीतेति स्फायी वृद्धावित्यतो निष्ठायां स्फायः स्फीनिष्ठायामिति स्फ्यादेशः। नीलोत्पलाभैः नीलकमलसदृशैः नेत्रैः अवकीर्यमाणः आत्मनः पातस्य गोचरीक्रियमाणः स इति शेषः शनैः शनैः मन्दं मन्दं यथा तथा राजपथं जगाहे प्रविवेश। गाहू विलोडन इत्यतो लिट्। विलोडनं च प्रवेशः।

(११) तमिति। केचित् जनाः सौम्यगुणेन सौम्येन गुणेन शान्त्येत्यर्थः उपलक्षितम्। उपलक्षणे तृतीया। तं बुद्धं तुष्टुवुः स्तुतवन्तः। तथा अन्ये जनाः दीप्ततया तस्य दीप्तियुक्तत्वात् ववन्दिरे तं नमश्चक्रुः। केचित् अस्य सौमुख्यतः सुमुखत्वात् प्रसन्नमुखत्वादित्यर्थः। श्रियं लक्ष्मीम्। एवंविधमुखशालिनो लक्ष्मीवत्त्वस्य युक्तत्वादिति भावः। आयुषः वैपुल्यं विपुलत्वं च आशंसिषुः ईहामासुः। एतस्य लक्ष्मीश्च भूयाद्दीर्घमायुश्चेत्याशिषः प्रायच्छन्नित्यर्थः। आङ्पूर्वाच्छसेराशीरर्थकाल्लुङ्। अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात्परस्मैपदम्।

(१२) निःसृत्येति। मार्गप्रवेशानन्तरं च कुब्जा गडुलाः ( कुबडा इति ख्याताः ) अन्तःपुरपरिचारकाः, कैरातकवामनानां कैराता बलवन्तः पुरुषा एव कैरातकास्ते च वामना ह्रस्वाकृतयः पुरुषाश्च तेषां व्यूहाः समूहाश्च। 'कैरातो दोर्महक्षामा' इति बलवत्पर्यायेषु हारावली। नार्यः परिचारिकाः स्त्रियश्च महाकुलेभ्यो महागृहेभ्यः कृशेभ्यो निवेशनेभ्यः क्षुद्रेभ्यो गृहेभ्यश्च यथायथं निःसृत्य निर्गत्य तं देवधिनाथध्वजवत् इन्द्रध्वजमिव प्रणेमुः नमश्चक्रुः। इन्द्रध्वजवदित्युपमा समुन्नतत्वं च पूजनीयताबुद्धिजनकत्वं चास्याकृतेरभिव्यञ्जयति। 'शालावेश्मनिवेशनोदवसित'मिति गृहपर्यायेषु हलायुधः। 'शाला सभोदवसितं कुल'मिति च गृहपर्यायेषु हैमः। कैरातकाः किरातजातीया अन्तःपुरपारिचारका वा।

(१३) तत इति। ततः स्त्रियः कर्त्र्यः कुमारो युवराजो बुद्धः। 'युवराजस्तु कुमार' इत्यमरः। खलु निश्चयेन गच्छति इति प्रवृत्तिं वार्तां 'वार्ता प्रवृत्ति' रित्यमरः

१ त्पलाभैरिव, पलद्वैरिव। २ दभिवीक्ष्यमाणः। ३ देवानुयातध्वज।

ताः स्रस्तकाञ्चीगुणविघ्निताश्च सुप्तप्रबुद्धाकुललोचनाश्च।
वृत्तार्धविन्यस्तविभूषणाश्च कौतूहलेनाभिभृताः परीयुः ॥ १४॥
प्रासादसोपानतलप्रणादैः काञ्चीरवैर्भूषणनिःस्वनैश्च।
विभ्रामयन्त्यो गृहपक्षिसंघानन्योन्यवेगाच्च समाक्षिपन्त्यः ॥ १५॥
कासांचिदासां तु वराङ्गनानां जातत्वराणामपि सोत्सुकानाम्।
गतिं गुरुत्वाज्जगृहुर्विशालाः श्रोणीरथाः पीनपयोधराश्च ॥१६॥

---

प्रेष्यजनात् भृत्यजनात् श्रुत्वा, मान्येन माननीयेन जनेन श्वशुरादिना कृताभ्यनुज्ञा दत्तानुमतयः सत्यः दिदृक्षया द्रष्टुमिच्छया हर्म्यतलानि मन्दिरोपरिभागान् जग्मुः गतवत्यः। एतेन स्त्रीणां विनीतत्वं गम्यते।

(१४) ता इति। कौतूहलेन युवराजदर्शनविषयकेण कौतुकेन अभिभृताः पूर्णाः ताः स्त्रियः स्रस्तकाञ्चीगुणविघ्निताः स्रस्ताया गमनवेगवशात्स्खलितायाः काञ्च्या मेखलाया गुणेन सूत्रेण विघ्निताः संजातगतिविघ्नाः च सुप्तप्रबुद्धाकुललोचनाश्च आदौ सुप्ताः निद्रिताः पश्चात्प्रबुद्धा जागरिताः अत एव आकुललोचना व्याकुलदृष्टयः। 'पूर्वकाले'त्यादिना समासः। वृत्तार्धविन्यस्तविभूषणाश्च वृत्तं जातं अर्धं असमग्रं विन्यस्तं विन्यासो येषां तथाविधानि भूषणान्यलङ्कारा यासां तास्तथाभूताः सत्यः परीयुः जग्मुः। एतेर्लिट्। अत्र स्रस्तकाञ्चीगुणविघ्नितत्वादौ कौतूहलेनाभिभृता इत्यस्य हेतुत्वात् पदार्थगतहेतुकं काव्यलिङ्गमलङ्कारः।

(१५) प्रासादेति। प्रासादसोपानतलप्रणादैः प्रासादस्य मन्दिरस्य सोपानानां आरोहणानां (पायरीति ख्यातानां) तलस्य गमनवेगवशाच्चरणतलाभिहतस्येति भावः प्रणादेन प्रकृष्टेन ध्वनिना। **काञ्चीरवैः** प्रयाणवेगचलितानां **मेखलानां शब्दैः** भूषणनिःस्वनैः गमनावेगान्दोलितानामलङ्काराणां ध्वनिभिश्च करणभूतैः गृहपक्षिसंघान् गृहवर्तिनां पक्षिणां समूहान् विभ्रामयन्त्यः विशिष्टभ्रमयुक्तान्कुर्वत्यः। वा चित्तविराग इत्यतो मितां ह्रस्व इत्यत्र वेत्यनुवृत्तेर्णिचि वैकल्पिको ह्रस्वः। अन्योन्यवेगात् अन्योन्यस्मात् यो वेगो गमनवेगस्तस्मात् हेतोः आक्षिपन्त्यः अन्योन्यमाकर्षन्त्यः। ताः परीयुरिति पूर्वेण सम्बन्धः। 'आक्षेपो भर्त्सनाकृष्टिकाव्यालङ्कृतिषु स्मृतः।' इति मेदिनी।

(१६) कासांचिदिति। तु किंतु आसां स्त्रीणां मध्ये कासांचित् सोत्सुकानां औत्सुक्ययुक्तानाम्। अत्रोत्सुकशब्दो भावप्रधानः। इष्टार्थप्राप्तौ कालातिपातासहिष्णुत्वमौत्सुक्यम्। तत एव च जातत्वराणां वराङ्गनानां श्रेष्ठस्त्रीणां गतिं गमनक्रियां विशाला विस्तृताः श्रोणीरथाः रथा इव श्रोण्यः कटयः तत्सन्निहिता नितम्बा इति

---

१ वृत्तान्त। २ नापि भृताः।

**शीघ्रं समर्थाऽपि तु गन्तुमन्या गतिं निजग्राह ययौ न तूर्णम्।**
**ह्रियाऽप्रगल्भानि निगूहमाना रहःप्रयुक्तानि विभूषणानि ॥ १७॥**
**परस्परोत्पीडनपिण्डितानां संमर्दसंशोभितकुण्डलानाम्।**
**तासां तदा सस्वनभूषणानां वातायनेष्वप्रशमो[1] बभूव ॥ १८॥**
**वातायनेभ्यस्तु विनिःसृतानि परस्परोपासितकुण्डलानि।**
**स्त्रीणां विरेजुर्मुखपङ्कजानि सक्तानि हर्म्येष्विव पङ्कजानि ॥ १९॥**

---

यावत्। तेषामेव गुरुत्वसंभवात्। पीनपयोधरा पीनाः स्थूलाः पयोधराः स्तनाः। ओप्यायी वृद्धाविस्यतो निष्ठायामोदित्वात्तो नः प्यायः पीति पी च। ते कर्तारः। गुरुत्वात् स्वस्य जडत्वाद्धेतोः जगृहुः निगृहीतां चक्रुः प्रतिबबन्धुरित्यर्थः। अनुपसृष्टस्यापि गृण्हातेरुपसृष्टवदर्थः। भवति च श्रोणीपदं नितम्बे लाक्षणिकम्। यथा कालीदासः 'श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यामि' त्यादि। केशवमिश्रोऽपि योषिद्वर्णनमरीचौ नितम्बवर्णनप्रस्तावे 'पीठप्रस्तरभूचक्रैर्नितम्बः परिवर्ण्यते' इत्यभिधाय 'रथचरणविशालश्रोणिलोलेक्षणेन' इत्युदाहरन्नितम्बार्थकत्वं श्रोणिशब्दस्य विस्पष्टयति ( अलङ्कारशेखरे )।

( १७ ) शीघ्रमिति। अन्या स्त्री तु शीघ्रं गन्तुं समर्था सत्यपि गतिं निजग्राह नियन्त्रयामास। कुत एतदित्याह ह्रियेति। रहःप्रयुक्तानि रहसि एकान्ते प्रयुक्तानि योजितानि। विलासानुकूलतया स्वच्छन्दं योजितानीत्यर्थः। तत एव च अप्रगल्भानि प्रयोगे प्रौढत्वशून्यानि विभूषणानि ह्रिया लज्जया हेतुभूतया निगूहमाना गोपयन्ती। हेतौ शानच्। तूर्णं सत्वरं न ययौ। अत्र शीघ्रगमनाभावे अलङ्करणगोपनस्य हेतुत्वोक्तेः काव्यलिङ्गमलङ्कारः।

( १८ ) परस्परेति। तदा वातायनेषु गवाक्षेषु परस्परोत्पीडनपिण्डितानां परस्परं अन्योन्यं उत्पीडनेन संमर्दवशात्संश्लेषातिशयेन पिण्डितानां निरन्तरत्वं प्राप्तानाम्। 'पिण्डितं गुणिते घने' इति मेदिनी। संमर्दसंशोभितकुण्डलानां संमर्देन संशोभितानि सम्यक् शोभां प्राप्तानि कुण्डलानि यासां तासाम्। सस्वनभूषणानां सस्वनानि ध्वनिसहितानि भूषणानि यासां तासां स्त्रीणां अप्रशमः प्रशान्त्यभावः बभूव आसीत्। ताः किल संमर्दातिशयवशादशान्तिं प्रापुरिति भावः।

( १९ ) वातायनेभ्य इति। तुकारश्चार्थः। किंच वातायनेभ्यः विनिःसृतानि राजकुमारावलोकनार्थं बहिर्विनिर्गतानि परस्परोपासितकुण्डलानि **परस्परं** अन्योन्यं **उपासितानि** संमर्दातिशयवशान्मुखानां परस्परं संश्लिष्टतया **उपगतानि** कुण्डलानि येषां तथाभूतानि स्त्रीणां मुखपङ्कजानि पङ्कजतुल्यानि मुखानि। उपमितं व्याघ्रादिभिरिति समासः। हर्म्येषु मन्दिरेषु सक्तानि लग्नानि पङ्कजानि कमलानि इव विरेजुः शुशुभिरे। राजतेर्लिट्। फणादित्वादेत्वाभ्यासलोपौ। उत्प्रेक्षालङ्कारः।

---

१ प्रक्षमो।

ततो विमानैर्युवतीकराग्रैः[1] कौतूहलोद्घाटितवातयानैः ।
श्रीमत्समन्तान्नगरं बभासे वियद्विमानैरिव साप्सरोभिः ॥ २० ॥
वातायनानामविशालभावादन्योन्यगण्डार्पितकुण्डलानि[2] ।
मुखानि रेजुः प्रमदोत्तमानां बद्धाः कलापा इव पङ्कजानाम् ॥ २१ ॥
तस्मिन्कुमारं पथि वीक्षमाणाः[3] स्त्रियो बभुर्गामिव गन्तुकामाः ।
उर्ध्वोन्मुखाश्चैनमुदीक्षमाणा[4] नरा बभुर्द्यामिव गन्तुकामाः ॥ २२ ॥

( २० ) तत इति । ततः युवतीकराग्रैः तरुणीनां हस्ताग्रैः कौतूहलोद्घाटितवातयानैः कौतूहलेन कौतुकेन उद्घाटितानि अपावृतानि वातयानानि वातायनानि येषां तैः विमानैः सार्वभौमगृहतुल्यैर्गृहैः करणभूतैः समन्तात् श्रीमत् शोभायुक्तं नगरं साप्सरोभिः अप्सरःसहितैः विमानैराकाशयानैरिव बभासे भासते स्म । वातयानानामुद्घाटिततया स्त्रीणां प्रत्यक्षीभावादौचित्यमुपमायाः । बिम्बप्रतिबिम्बभावेनोपमालङ्कारः । 'सार्वभौमगृहेऽपि च' इति विमानशब्दार्थे मेदिनी ।

( २१ ) वातायनानामिति । वातायनानां गवाक्षाणां अविशालभावात् विशालत्वाभावात् अन्योन्यगण्डार्पितकुण्डलानि अन्योन्येषां गण्डेषु अर्पितानि निहितानि कुण्डलानि येषां तानि । संमर्दातिशयवशान्मुखानां परस्परं संलग्नत्वादिति भावः । प्रमदोत्तमानां उत्तमस्त्रीणां मुखानि बद्धाः वातयनेषु निबद्धाः पङ्कजानां कमलानां कलापाः वन्दनमालिकाद्यर्थाः समूहा इव रेजुः शुशुभिरे । अत्र मुखकलापयोर्विभिन्नलिङ्गकत्वेऽपि नोपमाया दुष्टत्वम् । यदाह दण्डी 'न लिङ्गवचने भिन्ने न हीनाधिकताऽपि वा । उपमादूषणायालं यत्रोद्वेगो न धीमताम् ।' इति । उपमालङ्कारः । वस्तुतः पुनः पद्यमिदमूनविंशेन पद्येन गतार्थम् ।

( २२ ) तस्मिन्निति । अत्रेदमवधेयं राजकुमारः किल समुन्नतं स्यन्दनमारूढः नार्यस्तु तमभिवीक्षितुकामाः प्रासादपृष्ठमलङ्कृतवत्यः पुमांसः पुनर्भूमौ संचरन्त एवैनं वीक्षन्तेस्म । ततश्च स्यन्दनस्योन्नततत्वात्पुंसामुन्मुखता नारीणां चावनतवदनत्वं समुन्नततमप्रदेशारूढत्वादिति । **तस्मिन्** पथि मार्गे कुमारं वीक्षमाणाः पश्यन्त्यः स्त्रियः गां भूमिं गन्तुकामाः गन्तुं कामोऽभिलाषो यासां तथाभूता बभुः भासन्तेस्म । वातायनद्वाराऽङ्गानामवनमनादिति भावः । एनं राजकुमारं उदीक्षमाणाः पश्यन्तः तत एव च उर्ध्वोन्मुखाः उर्ध्वानि उन्नमितानीति यावत् उत्कृष्टानि मुखानि येषां तथाभूताः नराः पुरुषाः द्यां स्वर्गं गन्तुकामा गन्तुमिच्छव इव बभुः । भूतलचारितयामुखस्योन्नमनादिति भावः । गन्तुकामा इत्यत्र 'तुंकाममनसोरपि' इति मलोपः । उत्प्रेक्षालङ्कारः । अनवीकृतत्वं तु दुर्वारम् ।

१ करासैः, कलापैः । २ कुण्डलानाम् । ३-४ क्ष्यमाणा ।

दृष्ट्वा च तं राजसुतं स्त्रियस्ता जाज्वल्यमानं वपुषा श्रिया च।
धन्याऽस्य भार्येति शनैरवोचञ्छुद्धैर्मनोभिः खलु नान्यभावात् २३
अयं किल व्यायतपीनबाहू रूपेण साक्षादिव पुष्पकेतुः।
त्यक्त्वा श्रियं धर्ममुपैष्यतीति तस्मिन् हिता गौरवमेव चक्रुः २४
कीर्णं तथा राजपथं कुमारः पौरैर्विनीतैः शुचिधीरवेषैः।
तत्पूर्वमालोक्य जहर्ष किञ्चिन्मेने पुनर्भावमिवात्मनश्च ॥ २५ ॥
पुरं तु तत्स्वर्गमिव प्रहृष्टं शुद्धाधिवासाः समवेक्ष्य देवाः।
जीर्णं नरं निर्ममिरे प्रयातुं संचोदनार्थं क्षितिपात्मजस्य ॥ २६॥

---

( २३ ) दृष्ट्वेति। च किंच ताः पश्यन्तः स्त्रियः कर्त्र्यः वपुषा शरीरेण शरीरसौष्ठवेनेत्यर्थः श्रिया शोभया च जाज्वल्यमानं अतिशयेन दीप्यमानम्। ज्वलतेर्यङन्ताल्लटः शानच्। तं राजसुतं दृष्ट्वा अस्य भार्या धन्या पुण्यवती पुण्यं विनैवंविधस्य भर्तुर्दौर्लभ्यादिति भावः। 'सुकृती पुण्यवान्धन्य' इत्यमरः। इति शुद्धैः पापसंपर्कशून्यैर्मनोभिः उपलक्षिताः सत्यः शनैः मन्दमित्यर्थः। अवोचन्। उच्चैर्वचने श्रोतॄणामन्यथाग्रहसंभवादिति भावः। अन्यभावात् अन्येनाभिप्रायेण तदभिलाषरूपेणेत्यर्थः न खलु नैव अवोचन्। ब्रुवो लुङि ब्रुवो वचिरिति वचादेशे 'अस्यतिवक्ती'त्यादिना अङि' वच उमि 'ति उम्।

(२४) अयमिति। हिताः मित्राणि हितचिन्तका वा कर्तारः व्यायतपीनबाहुः व्यायतौ विशेषेण दीर्घौ कृतव्यायामौ वा 'व्यायतत्वादलक्ष्य' मित्यादौ तथार्थदर्शनात्। रूपेण साक्षात् पुष्पकेतुः मदन इव। 'पुष्पबाणः' 'पुष्पध्वन्वे' ति वा समुचितः पाठः। पुष्पकेतुपदस्य मदनवाचकत्वाभावात्। पुष्पाणि उद्दीपकतया केतुश्चिह्नं यस्येति वार्थः कथमपि कल्प्यः। अयं राजकुमारः श्रियं संपदं त्यक्त्वा किल निश्चयेन धर्मं उपैष्यति प्राप्स्यति प्रव्रज्यां ग्रहीष्यतीत्यर्थः। इति हेतोः तस्मिन् राजपुत्रविषये गौरवमेव आदरमेव चक्रुः। 'व्यायतं व्यापृते दीर्घे' इति मेदिनी 'प्रायश्चलं गौरवमाश्रितेषु 'इत्यादावादरार्थकत्वं गौरवपदस्य द्रष्टव्यम्। बाहू इति रोरीति लोपे ढ्रलोप इति दीर्घः।

( २५ ) कीर्णमिति। कुमारो राजपुत्रो बुद्धः विनीतैः विनयसंपन्नैः शुचिधीरवेषैः शुचयः शुद्धा धीराः प्रागल्भ्यसूचकाश्च वेषा येषां तैः पौरैः पुरवासिभिः तथा तेन प्रकारेण कीर्णं व्याप्तं राजपथं राजमार्गं तत्पूर्वं तदवलोकनमेव पूर्वं प्रथमं यस्मिन्कर्मणि तद्यथा तथा आलोक्य किंचित् जहर्ष हर्षं प्राप्तवान्। च किंच आत्मनः पुनर्भावं पुनरुत्पत्तिमिव मेने। निरन्तरमन्तःपुर एव निरुद्धतया पूर्वमिदानीं च निरवग्रहसंचारतयाऽदृष्टपूर्वशोभावलोकनाच्च पुनरिवाहं जात इति मेन इति भावः।

( २६ ) पुरमिति। तु हृष्टो राजपुत्रः किन्तु, शुद्धाधिवासाः शुद्धः अधिवासो मनो येषां ते देवाः कर्तारः। अधिवासपदं संस्कारार्थमपि लक्षणया हृदयमा-

ततः कुमारो जरयाभिभूतं दृष्ट्वा नरेभ्यः पृथगाकृतिं तम्।
उवाच संग्राहकमागतास्थस्तत्रैव निष्कम्पनिविष्टदृष्टिः ॥ २७॥

क एष भोः सूत नरोऽभ्युपेतः केशैः सितैर्यष्टिविषक्तहस्तः।
भ्रूसंवृताक्षः शिथिलानताङ्गः किं विक्रियैषा प्रकृतिर्यदृच्छा? ॥२८॥

इत्येवमुक्तः स रथप्रणेता निवेदयामास नृपात्मजाय।
संरक्ष्यमप्यर्थमदोषदर्शी तैरेव देवैः कृतबुद्धिमोहः ॥ २९॥

---

चष्टे। प्रहृष्टं आनन्दितं तत्पुरं नगरं स्वर्गमिव समीक्ष्य दृष्ट्वा क्षितिपात्मजस्य राजपुत्रस्य बुद्धस्य संचोदनार्थं धर्माभ्यासे प्रवर्तनार्थं देवाः जीर्णं वृद्धं नरं निर्ममिरे उत्पादयामासुः। जीर्णं नरमवेक्ष्य शरीरावस्थां विमृशतोऽस्य वैराग्यं जायतामित्याशयेनेति भावः।

( २७ ) तत इति। ततस्तदनन्तरं कुमारः सिद्धार्थः इतरपुरुषेभ्यः पृथगाकृतिं भिन्नाकारम्। तदानीं जीर्णादीनां राज्ञा नगरमार्गान्निःसारितत्वादिति भावः। तं जरया वार्धकेन अभिभूतं आक्रान्तं ग्रस्तमित्यर्थः। दृष्ट्वा आगतास्थः संजातेच्छः। 'यत्नापेक्षासु योषिति' इत्यास्थाशब्दार्थेषु मेदिनी। तत्रैव तस्मिन्नेव निष्कम्पनिविष्टदृष्टिः निष्कम्पं निश्चलं यथा तथा निविष्टा प्रविष्टा अन्यत्र संलग्नेत्यर्थः दृष्टिर्यस्य तथाभूतः सन् **संग्राहकं** संगृह्णाति नियच्छति रश्मीन् संग्राहकः तं **सारथिं** उवाच।

( २८ ) उक्तमाह क इति। भोः सूत सारथे सितैः श्वेतैः केशैः विशिष्टः। विशेषणे तृतीया। यष्टिविषक्तहस्तः यष्ट्यां दण्डे विषक्तौ विशेषेणासक्तौ हस्तौ यस्य सः। तदेकावलम्बनत्वाद्विषक्तत्वम्। भ्रूसंवृताक्षः भ्रूभ्यां संवृते आच्छादिते अक्षिणी यस्य तथाभूतः। वार्धकवशाद्भ्रुवोः शिथिलतयावगलितत्वात्। शिथिलानताङ्गः शिथिलं आनतं च अङ्गं शरीरं यस्य तथाभूतः अभ्युपेतः समीपमागतः एष नरः कः?। एषाऽस्मिन् दृश्यमाना श्वेतकेशत्वादिः किं विक्रिया विकारः? किं वा प्रकृतिः स्वभावः? अस्पृष्टविकाराऽवस्थेति यावत्। किं वा यदृच्छा स्वैरिता? स्वच्छन्दमेवानेन स्वयं विहितेयमवस्थेति भावः। 'यदृच्छा स्वैरिता' इत्यमरः।

( २९ ) इतीति। इत्येवं अनेन प्रकारेण उक्तः। राजपुत्रेणेत्यर्थात्। स रथप्रणेता रथकारः सूतः। सारथिरित्यर्थः। तैः पूर्वोक्तैर्देवैरेव कृतबुद्धिमोहः कृतो जनितो बुद्धेर्मोहो भ्रमो यस्य तथाभूतः तत एव न अदोषदर्शी निवेदने दोषदर्शनशीलो न भवति तथाभूतः सन् संरक्ष्यं गोपनीयमपि अर्थं वार्धकरूपं नृपात्मजाय राज्ञः पुत्राय निवेदयामास कथितवान्।

रूपस्य हर्त्री व्यसनं बलस्य शोकस्य योनिर्निधनं रतीनाम् ।
नाशः स्मृतीनां रिपुरिन्द्रियाणां सैषा जरा नाम ययैष भग्नः ॥३०॥
पीतं ह्यनेनापि पयः शिशुत्वे कालेन भूयः परिमृष्टमुर्व्याम् ।
क्रमेण भूत्वा च युवा वपुष्मान् क्रमेण तेनैव जरामुपेतः ॥ ३१ ॥
इत्येवमुक्ते चलितः स किंचिद्राजात्मजः सूतमिदं बभाषे ।
किमेष दोषो भविता ममापीत्यस्मै ततः सारथिरभ्युवाच ॥ ३२ ॥
आयुष्मतोऽप्येष वयःप्रकर्षान्निःसंशयं कालवशेन भावी ।
एवं जरां रूपविनाशयित्रीं जानाति चैवेच्छति चैष लोकः ॥३३॥

---

( ३० ) विकार एवायमित्याख्यातुकामो जरामुपवर्णयति । रूपस्येति यया कर्त्र्या एषः भग्नः अवनतशरीरः कृतः सा एषा रूपस्य सौन्दर्यस्य हर्त्री नाशयित्री बलस्य सामर्थ्यस्य व्यसनं नाशहेतुः शोकस्य योनिः उत्पत्तिस्थानं रतीनां प्रेम्णां सुरतसुखानां वा निधनं मरणं आत्यन्तिकनाशहेतुरित्यर्थः । स्मृतीनां स्मरणक्रियाणां नाशो नाशहेतुः इन्द्रियाणां रिपुः पीडाजनकत्वात् । जरा नाम वृद्धतेति प्रसिद्धा । अत्र व्यसनं बलस्येत्यादौ हेतुहेतुमतोरभेदेनाभिधानाद्धेतुरलङ्कारः । रिपुरिन्द्रियाणामिति रूपकं चेत्यनयोः संसृष्टिः । इन्द्रवज्रावृत्तम् ।

( ३१ ) अवस्थाविशेषरूपो विकार एवायं न स्वभावो नापि वा यदृच्छेत्याह । पीतमिति । अनेन पुरुषेणापि । इतरैरिवेत्यपिशब्दद्योत्यम् । शिशुत्वे बाल्ये पयः मातुर्दुग्धं पीतम् । कालेन ततः परं कियताऽपि समयेन उर्व्यां भूमौ भूयः पुनःपुनः परिमृष्टं लुठितम् । क्रमेण च वपुष्मान् प्रशस्तशरीरयुक्तः युवा भूत्वा । प्राशस्त्ये मतुप् । 'भूमनिन्दाप्रशंसासु' इत्युक्तेः । उक्तं च यौवनस्य शरीरसौष्ठवजनकत्वं तत्रभवता कालिदासेन 'असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य । कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साऽथ वयः प्रपेदे ।' इति । तेनैव क्रमेण जरामुपेतः प्राप्तः । उपेन्द्रवज्रावृत्तम् ।

( ३२ ) इत्येवमिति । इत्येवं उक्ते सति सारथिनेति शेषः । किंचित् चलितः स्थैर्यहानिं प्राप्तः । शरीरमात्रस्य जराभिभवशङ्कयेति भावः । स राजात्मजः सूतं सारथिं इदं वक्ष्यमाणं बभाषे उक्तवान् अपृच्छदित्यर्थः । भाषणमाह । एषः जरारूपः दोषः ममापि भविता भविष्यति किं इति बभाष इत्यनेन संबन्धः । भवितेति भुवो लुट् । ततः अस्मै राजपुत्राय सारथिः अभ्युवाच उक्तवान् उत्तरं ददावित्यर्थः ।

( ३३ ) उत्तरमाह आयुष्मत इति । आयुष्मतः भवतोऽपि 'आयुष्मन् रथिनं सूत' इतिवचनात् । कालवशेन कालबलात् । 'क्लीबमायत्तत्वे चेच्छाप्रभुत्वयोः' इति वशशब्दार्थेषु मेदिनी । वयःप्रकर्षात् वयस आधिक्यात् हेतोः एषः जरादोषः

ततः स पूर्वाशयशुद्धबुद्धिर्विस्तीर्णकल्पाचितपुण्यकर्मा ।
श्रुत्वा जरां संविविजे महात्मा महाशनेर्घोषमिवान्तिके गौः ॥ ३४॥
निःश्वस्य दीर्घं स शिरः प्रकम्प्य तस्मिंश्च जीर्णे विनिवेश्य चक्षुः।
तां चैव दृष्ट्वा जनतां सहर्षां वाक्यं ससंविग्नमिदं[1] जगाद ॥ ३५ ॥
एवं जरा हन्ति च निर्विशेषं स्मृतिं च रूपं च पराक्रमं च ।
न चैव संवेगमुपैति लोकः प्रत्यक्षतोऽपीदृशमीक्षमाणः[2] ॥ ३६ ॥
एवंगते सूत निवर्तयाश्वान् शीघ्रं गृहानेव[3] भवान्प्रयातु ।
उद्यानभूमौ हि कुतो रतिर्मे जराभये[4] चेतसि वर्तमाने ॥ ३७ ॥

निःसंशयं यथा तथा भावी भविता । देवानां प्रेरणया पुनर्वैराग्यातिशयोत्पादनार्थमाचष्टे । एष लोकः जरां एवं रूपविनाशयित्रीं रूपस्य विनाशिनीं जानाति च इच्छति च । इत्यहो विद्वन्मूढत्वं लोकस्येति भावः ।

( ३४ ) तत इति । ततः पूर्वाशयशुद्धबुद्धिः पूर्वेण जन्मान्तरीयेण आशयेन वासनया ( संस्कारेण ) शुद्धा निर्मला बुद्धिर्यस्य तथाभूतः । 'चित्तभूमावाशेरत इत्याशया वासनाः' इति योगवार्तिके विज्ञानः । आशयशब्दः पुनर्योगशास्त्रमात्रप्रसिद्धतयाऽप्रतीतत्वाय प्रकल्पते । अप्रतीतत्वं चैकदेशमात्रप्रसिद्धत्वमिति विश्वनाथः । विस्तीर्णकल्पाचितपुण्यकर्मा **विस्तीर्णे** दैवयुगसहस्ररूपत्वा**द्विस्तृते कल्पे** ब्राह्मदिनरूपे काले आचितं संचितं पुण्यं कर्म येन तथाभूतः । जन्मान्तरेष्वनेकवर्षसहस्रसंपादितपुण्यकर्मेत्यर्थः । स महात्मा राजपुत्रः, गौर्वृषभः अन्तिके समीपे महाशनेर्महतो वज्रस्य घोषं ध्वनिमिव, जरां श्रुत्वा संविविजे अतिशयेन भीतः । ओविजी भयचलनयोरित्यतो लिट् ।

( ३५ ) निःश्वस्येति । स राजपुत्रः दीर्घं निःश्वस्य शिरः प्रकम्प्य चालयित्वा युक्तमुक्तं सारथिनेति द्योतयितुमिति भावः । तस्मिन् जीर्णे वृद्धे चक्षुः दृष्टिं विनिवेश्य दत्त्वा तां च जनतां जनसमूहं । 'ग्रामजनबन्धुभ्यस्तल्'इति समूहार्थे-स्तल् । सहर्षां दृष्ट्वा ससंविग्नं संविग्नं संवेगः ( खेदः ) तेन सहितं यथातथा । विजे-'नंपुंसके भावे क्त' इति क्तः। तस्य चौदित्त्वान्नः। इदं वक्ष्यमाणं वाक्यं जगाद उक्तवान् ।

( ३६ ) वचनमाह । एवमिति । जरा वृद्धता कर्त्री एवमनेन प्रकारेण निर्विशेषं भेदरहितं यथातथा स्मृतिं च रूपं च पराक्रमं च हन्ति अत्यन्तं नाशयति । च किंच ईदृशं एतत्स्मृत्यादिहननं प्रत्यक्षतः ईक्षमाणः पश्यन्नपि लोकः संवेगं भीतिं नैव उपैति प्राप्नोति । आश्चर्यमेतदिति भावः ।

( ३७ ) एवमिति । हे सूत सारथे एवं गते स्थिते सति अश्वान् निवर्तय परावर्तय भवान् शीघ्रं सत्वरं गृहान् गृहमेव प्रयातु गच्छतु । 'गृहाः

१ स संविग्न । २ क्ष्यमाणः । ३ गृहाण्येव । ४ जराभवे ।

अथाज्ञया भर्तृसुतस्य तस्य निवर्तयामास रथं नियन्ता।
ततः कुमारो भवनं तदेव चिन्तावशः शून्यमिव प्रपेदे ॥ ३८ ॥
यदा तु तत्रैव न शर्म लेभे जरा जरेति प्रपरीक्षमाणः।
ततो नरेन्द्रानुमतः स भूयः क्रमेण तेनैव बहिर्जगाम ॥ ३९ ॥
अथापरं व्याधिपरीतदेहं त एव देवाः ससृजुर्मनुष्यम्।
दृष्ट्वा च तं सारथिमाबभाषे शौद्धोदनिस्तद्गतदृष्टिरेव ॥ ४० ॥
स्थूलोदरः श्वासचलच्छरीरः स्रस्तांसबाहुः कृशपाण्डुगात्रः।
अम्बेति वाचं करुणं ब्रुवाणः परं समाश्रित्य[1] नरः क एषः ॥ ४१ ॥

---

पुंसि च भूम्न्येवे 'त्यमरः। कुत एतदित्याह हि यतः चेतसि मनसि जराभये वार्धकजन्ये भये वर्तमाने सति मे उद्यानभूमौ उपवनप्रदेशे रतिः रागः कुतः कस्माद्भवेदिति शेषः। नैव भविष्यतीति भावः। तत एव चोपवनगमने प्रयोजनाभावाद्गृहानेव भवान्प्रयात्वित्यभिप्रायः।

(३८) अथेति। अथ अनन्तरं नियन्ता सारथिः तस्य भर्तृसुतस्य राजपुत्रस्य आज्ञया रथं निवर्तयामास परावर्तयामास। ततः कुमारः राजपुत्रः कर्ता चिन्तावशः जराविषयकचिन्ताधीनः सन् तदेव पूर्वमेव गृहं शून्यं निर्जनमिव प्रपेदे-प्राप्तवान्। अत्र तस्यैव भवनस्य शून्यवद्भासने कुमारस्य चिन्तावशत्वं हेतुरिति पदार्थगतहेतुकं काव्यलिङ्गमलङ्कारः।

(३९) यदेति तु किंतु यदा तत्रैव तस्मिन् मन्दिरे एव जरा जरा इति प्रपरीक्षमाणः प्रकर्षेण विचारयन्, चिन्तातिशयवशात् प्रकर्षेण परितो वीक्षमाणो वा शर्म सुखं न लेभे न प्राप। 'शर्मशातसुखानि च' इत्यमरः। ततः तदेत्यर्थः। स राजपुत्रः भूयः पुनरपि नरेन्द्रानुमतः राज्ञाऽनुमोदितः तेनैव पूर्वोक्तेनैव क्रमेण बहिः जगाम।

(४०) अथास्मिन्नवसरे देवकृतं वैराग्योद्दीपनमाचष्टे। अथेति। अथ तस्य बहिः प्रयाणानन्तरं त एव पूर्वे एव देवाः कर्तारः व्याधिपरीतदेहं व्याधिभिः रोगैः परीतो व्याप्तो देहो यस्य तथाभूतं अपरं मनुष्यं ससृजुः उत्पादितवन्तः प्रादुष्कृतवन्त इति यावत्। व्याधिः पुंसि। तं च मनुष्यं दृष्ट्वा शौद्धोदनिः शुद्धोदनस्य राज्ञः पुत्रः। अपत्यार्थीयमिञ्। तद्गतदृष्टिः तस्मिन् मनुष्ये गता दृष्टिर्यस्य तथाभूतः सन्नेव सारथिं आबभाषे उक्तवान्। पप्रच्छेति यावत्। अत्रोपसर्गो धात्वर्थानुवर्ती।

(४१) प्रश्नमाह स्थूलोदर इति। स्थूलोदरः श्वासचलच्छरीरः श्वासेन मुखाद्विनिर्गच्छता वायुना चलत् कम्पमानं शरीरं यस्य तथाभूतः। स्रस्तांसबाहुः स्रस्तौ अवगलितौ अंसौ स्कन्धौ ययोस्तथाभूतौ बाहू यस्य तादृशः। कृशपाण्डुगात्रः कृशानि

---

१ समाश्लिष्य।

ततोऽब्रवीत्सारथिरस्य सौम्य धातुप्रकोपप्रभवः प्रवृद्धः।
रोगाभिधानः सुमहाननर्थः शक्तोऽपि येनैष कृतोऽस्वतन्त्रः ॥४२॥
अथोचिवान् राजसुतः स भूयस्तं सानुकम्पो नरमीक्षमाणः।
अस्यैव जातः पृथगेष दोषः सामान्यतो रोगभयं प्रजानाम्? ॥४३॥
ततो बभाषे स रथप्रणेता कुमार साधारण एष दोषः।
एवं हि रोगैः परिपीड्यमानो रुजातुरो हर्षमुपैति लोकः॥ ४४॥

पाण्डूनि श्वेतवर्णानि च गात्राण्यवयवा यस्य तथाभूतः। 'क्लीबमङ्गे कलेवरे' इति गात्रशब्दार्थेषु मेदिनी। अम्ब हे मातः। अम्बार्थनद्योरिति ह्रस्वः। इति वाचं करुणं सशोकं यथा तथा ब्रुवाणः उच्चारयन्। अत्र करुणशब्दः स्वस्थायिभावं शोकं रूढ्या लक्षयति। तस्माच्च अर्शआदित्वादच्। परं अन्यं जनं समाश्रित्य वर्तमान इति शेषः। एष पुरो दृश्यमानः नरः कः किंनामधेयः। किमेतेनानुभूयमानाया अवस्थितेर्नामेति भावः।

(४२) तत इति। ततः कुमारप्रश्नानन्तरं सारथिः अब्रवीत् उक्तवान्। वचनमाह अस्येति। हे सौम्य सुन्दर राजपुत्र येन एष पुरुषः शक्तः स्वभावतः शक्तियुक्तोऽपि अस्वतन्त्रः पराधीनः। शक्तिलोपमापादितत्वादिति भावः। कृतः। सोऽयमिति शेषः। अस्य पुरुषस्य धातुप्रकोपप्रभवः धातूनां वातपित्तकफाख्यानां दोषाणां प्रकोपः क्षोभः प्रभव उत्पत्तिहेतुर्यस्य (क्षोभादुत्पत्तिर्यस्येति वा) तथा भूतः। 'मनः शिलादौ श्लेष्मादौ' इति धातुशब्दार्थेषु मेदिनी। 'शरीरदूषणाद्दोषा मलिनीकरणान्मलाः। धारणाद्धातवस्ते स्युर्वातपित्तकफास्त्रयः।' इति वैद्यके। एषामेव च प्रक्षोभो रोगहेतुरित्यपि प्रोक्तं तत्रैव 'रोगस्तु दोषवैषम्यं (क्षोभः) दोषसाम्यमरोगता।' इति। प्रवृद्धः अतिमात्रं वृद्धिं प्राप्तः सुमहान् अनर्थः रोगाभिधानः रोगसंज्ञः। इत उत्तरमेव वा येनेत्यादि योज्यम्। शक्त इति सांप्रतिकाभावे भूतपूर्वगतिरिति न्यायात्। शक्र इति पाठो न युक्तस्तस्य रोगसंपर्काभावात्।

(४३) अथेति। अथ स राजपुत्रः कर्ता सानुकम्पः अनुकम्पया दयया सहितः सन् तं नरं ईक्षमाणः पश्यन् तं सारथिं भूयः पुनरपि ऊचिवान् उवाच। ब्रुवो लिटः 'क्वसुश्च' ति क्वसुः। छान्दसोऽप्येष कविभिः प्रयुज्यते। वचनमाह अस्येति। एष दोषः विकारः अस्यैव पृथक् पार्थक्येन असाधारणतया जातः जातः किं? प्रश्ने काकुः। अथवेति शेषः। प्रजानां लोकानां सामान्यतः साधारण्येन रोगभयं अस्तीति शेषः। प्रश्ने काकुः। एष रोगसंज्ञोऽनर्थः किमेतन्मात्रनिष्ठः किंवा सर्वैरपि सामान्येनानुभवनीय इति प्रश्नः।

(४४) तत इति। ततः कुमारप्रश्नानन्तरं स रथप्रणेता रथकारः सारथिरित्यर्थः। बभाषे उक्तवान्। वचनमाह कुमारेति कुमार राजपुत्र एष दोषः रोगः

१ शक्रोऽपि। २ इत्यूचिवान्।

**इति श्रुतार्थः स विषण्णचेताः प्रावेपताम्बूर्मिगतः शशीव ।**
**इदं च वाक्यं करुणायमानः प्रोवाच किञ्चिन्मृदुना स्वरेण ॥४५॥**
**इदं च रोगव्यसनं प्रजानां पश्यंश्च विश्रम्भमुपैति लोकः ।**
**विस्तीर्णमज्ञानमहो नराणां हसन्ति ये रोगभयैरमुक्ताः ॥ ४६ ॥**
**निवृत्त्यतां सूत बहिःप्रयाणान्नरेन्द्रसद्मैव रथः प्रयातु ।**
**श्रुत्वा च मे रोगभयं रतिभ्यः प्रत्याहतं संकुचतीव चेतः ॥ ४७ ॥**

---

साधारणः सकलजनसामान्यः । सर्वैरप्यनुभवनीय इत्यर्थः । दोषपदस्य वातपित्तकफवाचकत्वेऽपि तज्जन्यत्वाद्धेतुहेतुमतोरभेदोपचारेण रोगार्थकता । निर्वेदोद्दीपनार्थं लोकस्य विप्रतीपदर्शितामाचष्टे एवमिति । एवं अनेन प्रकारेण हि निश्चयेन रोगैः कर्तृभिः परिपीड्यमानः रुजातुरः रुजया व्यथया आतुरः पीडितः सन् अपीति शेषः लोकः हर्षं आनन्दं उपैति प्राप्नोति नैव तु निर्वेदं प्राप्नोतीत्यहो मौढ्यमेतस्येति भावः ।

( ४५ ) इतीति । इति । एवं प्रकारेण श्रुतार्थः श्रुतोऽर्थो वस्तुस्थितिर्येन तथाभूतः स राजकुमारः विषण्णः खिन्नः सन् । साधारणतया रोगाणामात्मन्यपि निपाताशङ्कयेति भावः । अम्बूर्मिगतः अम्बूनां जलानां ऊर्मिषु वीचिषु गतः प्रतिबिम्बतया विद्यमानः शशी चन्द्र इव प्रावेपत प्रकर्षेणाकम्पत । रोगभियेति भावः । च किंच करुणायमानः करुणरस इवाचरन् मूर्तिमान् करुण इवावभासमान इत्यर्थः । कर्तुः क्यङ् सलोपश्चेति क्यङ् । ततश्च लटः शानच् । शोकातिशयवशात्करुणायमानत्वम् । किंचिन्मृदुना ईषद्दुर्बलेन स्वरेण ध्वनिना करणभूतेन । शोकाकुलत्वान्मनसो ध्वनेर्मृदुता । इदं वक्ष्यमाणं वाक्यं । प्रोवाच उक्तवान् । करुणायमान इति । करुणस्य वेदनामनुभवन्निति वार्थः । 'सुखादिभ्यः कर्तृवेदनायामि'ति क्यङि लटः शानच् । करुणपदं च शोकार्थकं लक्षणया ।

( ४६ ) वचनमाह इदमिति । इदं च प्रजानां जनानां रोगव्यसनं रोगाणां संबन्धि रोगरूपं वा व्यसनं दुःखं अस्तीति शेषः । च किंच लोकः इदमित्यनुवर्तते । इदं व्यसनं पश्यन् विश्रम्भं विश्वासं, जीवितविषय इति भावः । उपैति प्राप्नोति । अतिविषममेतादिति भावः । सत्सु हि प्राणापहारिषु रोगेषु क इव जीविते विश्वास इति । अहो इत्याश्चर्ये नराणां लोकानां अज्ञानं विस्तीर्णं विशालम् । अतिमहदित्यर्थः। कुत एतदित्याह । ये नराः रोगभयैः कर्तृभिः अमुक्ता अत्यक्ताः सन्तोपि हसन्ति । आनन्दवशादिति भावः । एतदेवामीषामज्ञानस्य विस्तीर्णत्वं यदेते रोगाविमुक्तत्वादात्मनः, शोचितव्येऽपि हसन्तीति । 'विश्रम्भः केलिकलहे विश्वासे प्रणयेऽपि च' इति मेदिनी । 'प्रजा स्यात्सन्ततौ जने' इत्यमरः ।

( ४७ ) निवृत्ततामिति । हे सूत सारथे बहिःप्रयाणात् बहिर्गमनात् निवृत्त्यतां परावृत्त्यताम् । त्वयेति शेषः । रथः कर्ता नरेन्द्रसद्मैव राजगृहमेव प्रयातु

---

१ निवर्त्यताम् ।

ततो निवृत्तः स निवृत्तहर्षः प्रध्यानयुक्तः प्रविवेश सद्म ।
[1]तं द्विस्तथा प्रेक्ष्य च संनिवृत्तं पुर्यागमं भूमिपतिश्चकार ॥ ४८ ॥
श्रुत्वा निमित्तं तु निवर्तनस्य संत्यक्तमात्मानमनेन मेने ।
मार्गस्य शौचाधिकृताय चैव [2]चुक्रोध रुष्टोऽपि च नोग्रदण्डः ॥४९॥
भूयश्च तस्मै विदधे सुताय विशेषयुक्तं विषयप्रकारम् ।
चलेन्द्रियत्वादपि [3]नाम सक्तो नास्मान्विजह्यादिति नाथमानः॥५०॥

गच्छतु । तत्रैव नीयतामित्यर्थः कुत एतदित्याह । चकारो हेत्वर्थः । निपातानामनेकार्थत्वात् । श्रुत्वा हीति पाठस्तु समीचीनः । नैव पुनरसौ दृश्यते क्वापि । च यस्मादित्यर्थः मे मम चेतो मनः कर्तृ रोगभयं रोगेभ्यो वा रोगरूपं वा भयं श्रुत्वा प्रत्याहतं प्राप्तप्रत्याघातं सत् रतिभ्यः विहारेभ्यः संकुचतीव संकोचं प्राप्नोतीव । तस्मान्निवृत्यतामिति संबन्धः ।

( ४८ ) तत इति । ततः तदनन्तरं निवृत्तः गमनतः परावृत्तः निवृत्तहर्षः निवृत्तः प्रतिगतो नष्ट इत्यर्थः हर्ष आनन्दो यस्य तथाभूतः स राजकुमारः प्रध्यानयुक्तः प्रकृष्टचिन्तायुक्तः सन् सद्म गृहं प्रविवेश । भूमिपतिः राजा शुद्धोदनः तं तथा द्विः द्वौ वारौ । 'द्वित्रिचतुर्भ्यः सुच्' इति क्रियाभ्यावृत्तिगणने सुच् । संनिवृत्तं प्रयाणतः परावृत्तं प्रेक्ष्य दृष्ट्वा ज्ञात्वेत्यर्थः पुरि नगरे आगमं आगमनं चकार । 'पूः स्त्री पुरी' त्यमरः । नगराद्बहिर्वर्तमानो निवृत्तिकारणविज्ञानार्थं नगरं प्राप्तवानित्यर्थः ।

( ४९ ) श्रुत्वेति । निवर्तनस्य गमनतः परावर्तनस्य निमित्तं कारणं वृद्धविकलावलोकनरूपं श्रुत्वा तु अनेन पुत्रेण आत्मानं संत्यक्तं मेने । दृढरूढमूलत्वान्निर्वेदस्य नातःपरमसौ संसारपाशं कामयिष्यत इति परित्यक्ष्यत्येवात्मानमित्यवधारयामासेति भावः । च किंच मार्गस्य शौचाधिकृताय शौचे शोधने अधिकृताय पुरुषाय चुक्रोधैव । कुध्यतेर्लिट् । 'कुधद्रुहे' त्यादिना चतुर्थी । तदपराधजन्यत्वात्पुत्रनिर्वेदस्येति भावः । रुष्टः कुपितोऽपि च उग्रदण्डः उग्रस्तीक्ष्णो दण्डो यस्य तथाभूतः न आसीदिति शेषः । एतेन राज्ञो दयाशीलत्वं द्योत्यते ।

( ५० ) भूय इति । च किंच चलेन्द्रियत्वात् चलान्यस्थिराणि इन्द्रियाणि यस्य तथाभूतत्वात् हेतोः । सर्वथा किल चञ्चलान्येवेन्द्रियाणि मनुजानां नैकान्ततः स्थिरनिश्चयानि भवन्ति, मानवश्चायं, तत एव च चलान्येवास्येन्द्रियाणि; तस्माद्धेतोरिति भावः । इन्द्रियाणां चलत्वादिति यावत् । अपिनाम कदाचित् सक्तः विषयेष्वासक्तः सन् अस्मान् न विजह्यात् न त्यजेत् इति नाथमानः आशंसमानः । नाथतेराशीरर्थकात्कर्तरि शानच् । स राजा भूयः पुनरपि तस्मै सुताय तं पुत्रमनुकूलयितुं प्रलोभयितुं वा विशेषयुक्तं पूर्वस्मादाधिक्ययुक्तं विषयप्रकारं विषयाणां भोगसाधनानां

१ तद्विस्तरं । २ चुक्रोश । ३ नापि शक्तो ।

यदा च शब्दादिभिरिन्द्रियार्थैरन्तःपुरे नैव सुतोऽस्य रेमे ।
ततो बहिर्व्यादिशति स्म यात्रां रसान्तरं स्यादिति मन्यमानः ५१
स्नेहाच्च भावं तनयस्य बुद्ध्वा संवेगदोषानविचिन्त्य कांश्चित् ।
योग्याः समाज्ञापयति स्म तत्र कलास्वभिज्ञा इति वारमुख्याः ५२
ततो विशेषेण नरेन्द्रमार्गे स्वलङ्कृते चैव परीक्षिते च ।
व्यत्यास्य सूतं च रथं च राजा प्रस्थापयामास बहिः कुमारम् ५३

---

प्रकारं भेदम् । विषयविशेषमित्यर्थः । विदधे चकार । 'क्रियार्थोपपदस्य चे'ति चतुर्थी ।

(५१) यदेति । चकारस्त्वर्थः । यदा च किन्तु यदा अस्य सुतः पुत्रः अन्तःपुरे स्त्रीगृहे शब्दादिभिः शब्दरूपरसगन्धस्पर्शैः इन्द्रियार्थैः श्रोत्रादीनामिन्द्रियाणां विषयैः स्वयमुपकल्पितैः करणभूतैः नैव रेमे नैव रमते स्म । आनन्दं नानुबभूवेत्यर्थः । ततः तदा स राजा रसान्तरं रसभेदः स्यात् भवतु इति मन्यमानः अभिप्रयन् बहिः यात्रां प्रयाणं व्यादिशति स्म आज्ञापयामास । 'स्मोत्तर'इति लिङर्थे लट् । एकस्मात्किल रसादुद्विग्नो जनो रसान्तरासेवनेन व्यपगतोद्वेगो नवीकृतोत्साहः पुनः पूर्वं रसमाद्रियत इति पुत्रोऽपि मे रसान्तरमनुभूय प्रशान्तोद्वेगः पुनरन्तःपुरोपभोगे प्रवर्ततामित्यभिप्रायेण बहिर्यात्रामेतस्यादिष्टवानित्यर्थः ।

(५२) स्नेहादिति । स राजेति कर्तृपदं पूर्वस्मादनुवर्तते । तनयस्य पुत्रस्य भावमवस्थां बुद्ध्वा ज्ञात्वा स्नेहात् पुत्रविषयकात्प्रेम्णो हेतुभूतात् कांश्चित्कानपि संवेगदोषान् संवेगजनकान् दोषान् अविचिन्त्य मनस्यकृत्वा । विषयेषु प्रवर्त्यमानोऽप्येष उद्वेगजनकं कमपि दोषविशिष्टं पदार्थमवलोक्य पुनरुद्विजेतेत्यनाकलय्येति भावः । कलासु बाभ्रव्योक्तासु चतुःषष्टौ कामकलासु विषये अभिज्ञा विदुष्य इति हेतोः तत्र स्वाभिमते रसान्तरोत्पादनरूपे कर्मणि योग्याः वारमुख्या वारे वेश्यासमूहे मुख्या जनैर्गुणवत्तया सत्कृता वेश्याः समाज्ञापयति स्म आज्ञापयामास । 'सा जनैः । सत्कृता वारमुख्या स्यात्' इति वेश्याप्रस्तावेऽमरः । अत्र कलापदं बाभ्रव्योपदिष्टकलापरमेव तासामेव कामकलायामत्यन्तमुपयुक्तत्वात् । तदभिज्ञा हि स्त्रियो योगिनमपि विमोहयन्तीति । तदात्मको हि कामः । एतासां च विस्तरः कामसूत्रे सांप्रयोगिके द्रष्टव्यः । विद्याङ्गभूतास्तु कला नात्र विवक्ष्यन्ते प्रकृतानुपयोगात् । ता अपिच तत्रैव साधारणे दृश्याः ।

(५३) तत इति । ततः तदनन्तरं नरेन्द्रमार्गे राजमार्गे विशेषेण आधिक्येन स्वलङ्कृते माल्यध्वजादिभिः सुष्ठु विभूषिते चैव परीक्षिते उद्वेगजनकवस्तुशङ्कया परितो दृष्टे च सति । राजा शुद्धोदनः सूतं पूर्वं सारथिं रथं च व्यत्यास्य परिवर्त्य कुमारं पुत्रं बहिः प्रस्थापयामास प्रेरयामास । कदाचित्पूर्वस्य सारथे रथस्यैव वा दोषः कुमारस्य निर्वेद इति संभावयतो रथादिपरिवर्तनम् ।

तस्तस्तथा गच्छति राजपुत्रे तैरेव देवैर्विहितो गतासुः ।
[1]यं तत्र मार्गे नृभिरुह्यमानं सूतः कुमारश्च ददर्श नान्यः ॥ ५४ ॥

अथाब्रवीद्राजसुतः स सूतं नरैश्चतुर्भिर्ह्रियते क एषः ।
दीनैर्मनुष्यैरनुगम्यमानो यो भूषितोऽश्वास्यवरुद्यते च ॥ ५५ ॥

ततः स शुद्धात्मभिरेव देवैः शुद्धाधिवासैरभिभूतचेताः ।
अवाच्यमप्यर्थमिमं नियन्ता प्रव्याजहारार्थविदीश्वराय ॥ ५६ ॥

---

( ५४ ) तत इति । ततः प्रस्थापनानन्तरं राजपुत्रे तथा तेन प्रकारेण गच्छति सति तैः पूर्वैरेव देवैः कर्तृभिः गतासुः गता नष्टा असवः प्राणा यस्य तथाभूतः ( मृतः ) पुरुषः विहितः प्रादुष्कृतः । तत्र मार्गे नृभिः पुरुषैः उह्यमानं स्कन्धे कृत्वा नीयमानं यं गतासुं सूतः सारथिः कुमारो राजपुत्रश्च ददर्श । अन्यस्तद्भिन्नः एकोऽपीत्येकवचनेन द्योत्यते । न ददर्श ।

( ५५ ) अथेति । अथ तदवलोकनानन्तरं स राजसुतो राज्ञः पुत्रः सूतं सारथिं अब्रवीत् उक्तवान् पृष्टवानित्यर्थः । प्रश्नमाह नरैरिति । अश्वासो श्वासशून्यः बहुव्रीहिणैव निर्वाहे निरर्थकोऽत्रमत्वर्थीय इनिः। मत्वर्थीयविशिष्टेन हि कर्मधारयापेक्षया बहुव्रीहिरेव ज्यायाँल्लाघवात् । तथाहि निर्दिष्टं राजानकरुय्यकेण कात्यायनवचनं व्यक्तिविवेकव्याख्याने ' कर्मधारयमत्वर्थीयाभ्यां बहुव्रीहिर्लाघवात् । इति । ताच्छीलिकणिन्यन्तेन वाऽयं नञ्समासः । श्वसितुं शीलं यस्य तथाभूतो न भवतीति। भूषितः प्रेतमाल्यादिभिरन्त्यमण्डनैरलङ्कृतः । दीनैर्दैन्यवद्भिः मनुष्यैः अनुगम्यमानः क एषः चतुर्भिः नरैः पुरुषैः ह्रियते नीयते । अवरुद्यते रोदनात्मना शोच्यते च । मनुष्यैरित्यर्थात्संबध्यते ।

( ५६ ) तत इति । ततः प्रश्नानन्तरं शुद्धात्मभिः पवित्रमूर्तिभिः शुद्धाधिवासैः शुद्धः अधिवासः संस्कारो मनो वा तद्विशिष्टं येषां तैः । बाह्याभ्यन्तरशौच संपन्नैरित्यर्थः । द्विविधं हि शौचमाम्नायते मुनिभिः । यदाह व्याघ्रपादः । ' शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा । मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम् । ' इति । देवैः एव अभिभूतचेताः अभिभूतं पराभूतं परतन्त्रीकृतमिति यावत् चेतो मनो यस्य तथाभूतः अर्थवित् भूतार्थज्ञः सः नियन्ता सारथिः अवाच्यं वक्तुमयोग्यमपि इमं वक्ष्यमाणं अर्थं ईश्वराय आत्मनः प्रभवे राजपुत्राय प्रव्याजहार सुस्पष्टतया निवेदयामास । व्याङ्पूर्वो हरतिर्वचने ।

---

१ तं चैव मार्गे मृतमुह्यमानं । २ भूषितोऽश्वाप्यवरुद्यते च, भूषितश्चाप्यवरुद्यते, भूषितैश्चाप्यवरुद्यते च ।

बुद्धीन्द्रियप्राणगुणैर्वियुक्तः सुप्तो विसंज्ञस्तृणकाष्ठभूतः।
संवर्ध्य[1] संरक्ष्य च यत्नवद्भिः प्रियाप्रियैस्त्यज्यत एष कोऽपि॥५७॥
इति प्रणेतुः स निशम्य वाचं संचुक्षुभे किंचिदुवाच चैनम्।
न केवलस्यैष जनस्य धर्मः सर्वप्रजानामयमीदृशोन्तः?॥५८॥
ततः प्रणेता वदति स्म तस्मै सर्व[2]प्रजानामिदमन्तकर्म।
हीनस्य मध्यस्य महात्मनो वा सर्वस्य लोके नियतो विनाशः॥५९॥

(५७) सारथेर्व्याहारमाचष्टे बुद्धीति। प्रियाप्रियैः प्रियैः प्रेमविषयीभूतैः अप्रियैः प्रेमाविषयीभूतैरपि हितकारिभिश्च कर्तृभूतैः यत्नवद्भिः प्रयत्नयुक्तैः सद्भिः पूर्वं संवर्ध्य वर्धयित्वा संरक्ष्य रक्षित्वा च इदानीं बुद्धीन्द्रियप्राणगुणैर्वियुक्तः बुध्या इन्द्रियैश्चक्षुरादिभिः प्राणैः गुणैः शौर्यादिभिश्च वियुक्तः विरहितः सुप्तः स्वापं महानिद्रां प्राप्तः मृत इत्यर्थः। अत एव विसंज्ञः विगतचेतनः तत एव च तृणकाष्ठभूतः तृणैः काष्ठैर्वा सदृशः एषः कोऽपि पुरुषः त्यज्यते त्यागार्थं श्मशानं नीयत इत्यर्थः। 'भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोः।' इति विश्वः। अत्र प्रियैश्चाप्रियैश्चेति द्वन्द्वे मित्रैश्च शत्रुभिश्चेत्यर्थो न युक्तः शत्रूणां संवर्धनकर्तृत्वादेरत्यन्तमभावादिति।

(५८) इतीति। स राजपुत्रः कर्ता, इति एवंप्रकारां प्रणेतुः सारथेः वाचं निशम्य श्रुत्वा संचुक्षुभे विचलितचित्तो बभूव। क्षुभ संचलन इति भौवादिकाल्लिट्। अनुदात्तेत्त्वादात्मनेपदम्। 'क्षुभ्नाति क्षोभते क्षुभ्येदिति संचलने क्षुभेः। इति दैवम्। एनं सारथिं किंचित् उवाच च उक्तवांश्च पृष्टवानपीत्यर्थः। प्रश्नमेवाह। नेति। एष धर्मः मरणरूपः केवलस्य एकाकिन एव जनस्य न इति प्रश्ने काकुः। न किमित्यर्थः। ईदृशः एवंविधः अयं अन्तो नाशः सर्वप्रजानां सर्वासां प्रजानां जनानाम्। अस्ति किमिति शेषः। प्रश्ने ह्यत्र काकुरिति। 'प्रजा स्यात्सन्ततौ जने' इत्यमरः।

(५९) तत इति। ततः तस्य प्रश्नानन्तरं प्रणेता सारथिः तस्मै राजपुत्राय वदति स्म कथयामास। कथनमेवाह सर्वेति। इदं अन्तकर्म नाशरूपा क्रिया। कर्मशब्दः क्रियावचनो व्याकरणे प्रसिद्धः। सर्वप्रजानां सर्वेषां जनानामस्तीति शेषः। उक्तं समर्थयति। हीनस्येति। हीनस्य निकृष्टस्य मध्यस्य मध्यमश्रेणीयस्य महात्मनः उत्कृष्टस्य वा सर्वस्य जनस्य विनाशो मृत्युः लोके अस्मिन् जगति नियतः अवश्यंभावी।

१ संवध्य, संवध्य। २ सर्वप्रजानामयमन्तकर्मा, सर्वत्रजाना।

ततः स धीरोऽपि नरेन्द्रसूनुः श्रुत्वैव मृत्युं विषसाद सद्यः।
अंसेन[1] संश्लिष्य च कूवराग्रं प्रोवाच निर्ह्रादवता स्वरेण[2] ॥ ६० ॥
इयं च निष्ठा नियतं प्रजानां प्रमाद्यति त्यक्तभयश्च लोकः।
मनांसि शङ्के कठिनानि नृणां स्वस्थास्तथा ह्यध्वनि वर्तमानाः॥६१॥
तस्माद्रथः[3] सूत निवर्त्यतां नो विहारभूमौ[4] न हि देशकालः।
जानन्विनाशं कथमार्तिकाले[5] सचेतनः स्यादिह हि प्रमत्तः॥ ६२ ॥

---

( ६० ) तत इति। धीरः धैर्यसम्पन्नोऽपि सः नरेन्द्रसूनुः राजपुत्रः कर्ता ततः तस्मात्सारथेः **मृत्युं** सर्वप्राणिनियतं **मरणं** श्रुत्वैव सद्यः तत्कालं **विषसाद** विषादं प्राप्तवान्। च किंच अंसेन स्कन्धेन कूवराग्रं कूवरस्य युगन्धरस्याग्रम्। यत्राश्वबन्धनकाष्ठमाबध्यते स कूवरः 'दाण्डी' ति महाराष्ट्र्यां प्रथितः। **संश्लिष्य** सम्यक् स्पृष्ट्वा अवलम्ब्येति यावत्। एतेन राजपुत्रस्य रथादवतीर्यावस्थानं व्यज्यते। अन्यथा कूवराग्रसंश्लेषायोगात्। 'कूवरस्तु युगन्धर' इत्यमरः। **निर्ह्रादवता** प्रतिध्वनियुक्तेन। ध्वनिसामान्यवचनोऽपि निर्ह्रादशब्दोऽत्र प्रतिध्वनिरूपस्य ध्वनिविशेषस्य वाचकः। स्वरेण ध्वनिना (शब्देन) 'षड्जादौ च ध्वनौ पुमान्' इति स्वरशब्दार्थेषु मेदिनी। प्रोवाच उक्तवान्।

( ६१ ) वचनमाह। इयमिति। प्रजानां लोकानां इयं त्वया निवेदिता निष्ठा नाशः अन्तो वा नियतं अस्तीति शेषः अवश्यंभाविनीत्यर्थः। नियतमिति सामान्ये नपुंसकम्। च लोकः त्यक्तभयः त्यक्तं भयं नाशभीतिर्येन तथाभूतः सन् प्रमाद्यति प्रमादान् (अनवधानमूलानि कार्याणि) करोति च। अत्यन्तं विसदृशमेतदिति भावः। ततः किम्? इत्याह-**मनांसीति**। नृणां नराणां मनांसि कठिनानि सौकुमार्यविपरीतगुणवन्तीत्यर्थः। इति शङ्के अहं संभावयामि। 'मन्ये-शङ्के ध्रुवं प्राय' इत्यादीनां संभावनावाचकत्वोक्तेः। हि यतः तथा त्वदुक्तप्रकारेण अध्वनि विनाशमार्गे वर्तमाना अपीति शेषः। स्वस्थाः स्वास्थ्यसंपन्नाः सन्तीति शेषः। अत्र च तुरीयः पादो द्वितीयेन चरणेन गतार्थ इव प्रतिभाति।

( ६२ ) ततः किमित्याह। तस्मादिति। तस्मात् यस्मादियं निष्ठा नियतं प्रजानां तस्माद्धेतोः हे सूत नः अस्माकं रथः निवर्त्यतां परावर्त्यतां, त्वयेति शेषः। ननु भो विहारभूमिं प्रस्थिताः स्मस्तत्र तावद्गत्वा विधाय विहारं प्रतिनिवर्तेतामायुष्मानिति चेत्तत्राह। विहारभूमाविति। विहारभूमौ लीलाया अनुष्ठानप्रदेशे देशकालः देशेन मरणभीतानां योग्येन प्रदेशेन सहितः कालः समुचितः समयः न हि

---

१ अंशेन। २ श्रवणे (?)। ३ रथं। ४ विहारभूमिं, यिहारभूतो। ५ कथमत्रिकालः।

**इति ब्रुवाणेऽपि नराधिपात्मजे निवर्तयामास स नैव तं रथम् ।**
**विशेषयुक्तं तु नरेन्द्रशासनात्सपद्मखण्डं वनमेव निर्ययौ ॥ ६३ ॥**
**ततः शिवं कुसुमितबालपादपं परिभ्रमत्प्रमुदितमत्तकोकिलम् ।**
**निपानवत्स[1] कमलचारुदीर्घिकं ददर्श तद्वनमिव नन्दनं वनम् ॥६४॥**

---

नास्ति खलु । 'विहारो भ्रमणे स्कन्धे लीलायां सुगतालये' इति मेदिनी । मरणभीतानां तन्निवारणाभिलाषिणां च तपआद्यनुष्ठानार्थं प्रशान्तस्यैव देशस्य कालस्य चावश्यकता, विहारभूमिस्तु तद्विपरीतेति भावः । एतदेव विस्पष्टयति । जानन्निति । हि यतः सचेतनः चेतनावान् (प्राणी) कर्ता विनाशं अवश्यंभाव्यात्मनो मरणं जानन् सन् आर्तिकाले आर्तेः पीडायाः संबन्धिनि काले, पीडाजनके समय इत्यर्थः । 'आर्तिः पीडाधनुष्कोट्योः' इत्यमरः । इह विहारभूमौ अस्मिँल्लोके वा कथं प्रमत्तः अवधानशून्यः स्यात् । मरणप्रतीकारलक्षणमात्मनः कर्तव्यं विस्मरन् विहरेदित्यर्थः । न कथमपीति भावः । नात्र विहर्तुमिच्छामि तत्प्रतिनिवर्त्यतां रथ इत्याशयः।

(६३) इतीति । नराधिपात्मजे राजपुत्रे बुद्धे इति एवं प्रकारेण ब्रुवाणे वदति सत्यपि स सूतः तं रथं नैव निवर्तयामास । तर्त्कि तत्रैवावस्थित इति चेत्तत्राह । विशेषेति । तु किंतु नरेन्द्रशासनात् राज्ञ आदेशात् हेतोः । 'शासनं राजदत्तोर्व्यां लेखाज्ञाशास्त्रशान्तिषु ।' इति मेदिनी । विशेषयुक्तं विशेषैः स्त्रीजनसन्निधानादिभिर्विशिष्टैः प्रकारैः युक्तं सपद्मखण्डं पद्मानां खण्डैः समूहैः सह वर्तमानं । 'अब्जादिकदम्बे खण्डमस्त्रियाम् ।' इत्यमरः । वनं उपवनमित्यर्थः । एव निर्ययौ प्रायात् । निर्यातेः प्रयाणार्थकत्वात्सकर्मकता ।

(६४) तत इति । ततः प्रयाणानन्तरं स सारथिः शिवं शोभनं कुसुमितबालपादपं कुसुमिताः संजातपुष्पाः बालाः पादपास्तरवो यस्मिंस्तथाभूतं। कुसुमितमिति 'तदस्मिन्संजातं तारकादिभ्य इतच्' इतीतच् । परिभ्रमत्प्रमुदितमत्तकोकिलम् परिभ्रमन्तः परितः संचरन्तः प्रमुदिता हृष्टा मत्ता मदविशिष्टाश्च कोकिला यत्र तत्।निपानवत् नियतं पिबन्त्येषु जलं निपानानि कूपादिसमीपे कृताः पानीयजलाधाराः ते सन्त्यत्र तथाभूतं, 'करणाधिकरणयोश्च' त्यधिकरणे ल्युट् । 'आहावस्तु निपानं स्यादुपकूपजलाशये ।' इत्यमरः । कमलचारुदीर्घिकं कमलैश्चार्व्यो मनोहरा दीर्घिका वाप्यो यस्मिंस्तथाभूतं तत् वनं नन्दनं वनमिव नन्दनाख्यं दिव्यं वनमिव ददर्श दृष्टवान् । अत्र तत्पदसमवहितं वनपदमुपमेयप्रतीतिकरं, ततश्च न युक्तस्तदुत्तरमिवशब्दप्रयोगः । न च प्रयुक्तोऽप्येवमिवशब्दो भित्त्वा क्रमं द्वितीयवनपदोत्तरं योज्य इति वाच्यम् । 'इवेन सह नित्यसमासो विभक्त्यलोपश्चेत्यनुशासनातिक्रमापत्तेः । उपमालङ्कारः । रुचिरावृत्तम् । 'जभौ सजौ गिति रुचिरा चतुर्ग्रहैः ।' इति लक्षणात् । एतदेवोत्तरपद्येऽपि ।

---

१ विपानवत् ।

वराङ्गनागणकलिलं नृपात्मजस्ततो बलाद्वनमभि नीयते स्म तत् ।
वराप्सरोवृतमलकाधिपालयं नवव्रतो मुनिरिव विघ्नकातरः ॥६५॥

इति श्रीबुद्धचरिते महाकाव्येऽन्तःपुरविहारो नाम
तृतीयः सर्गः ।

---

श्रीशिवः शरणम् ।

# अथ बुद्धचरिते चतुर्थः सर्गः ।

ततस्तस्मात्पुरोद्यानात्कौतूहलचलेक्षणाः ।
प्रत्युज्जग्मुर्नृपसुतं प्राप्तं वरमिव स्त्रियः ॥ १ ॥

---

( ६५ ) वराङ्गनेति । ततः वनदर्शनानन्तरं नवव्रतः नवं अचिरगृहीतं व्रतं तपश्चरणरूपं यस्य तथाभूतः विघ्नकातरः तपोविघ्नेभ्यो भीरुः मुनिर्योगी कर्मभूतः । 'अधीरे कातरत्रस्तभीरुभीलुकभीलुकाः ।' इत्यमरः। विघ्नास्तु अन्तरायापरपर्यायाः । ते च पातञ्जले प्रदर्शिताः 'व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेन्तरायाः ।' इति । (१।३०) । वराप्सरोवृतं वराभिः श्रेष्ठाभिरप्सरोभिः स्वर्वेश्याभिः वृतं आवृतं व्याप्तमिति यावत् । अलकाधिपालयं अलकाया नाम नगर्या अधिपस्य कुबेरस्य आलयं गृहमिव । आलयशब्दः पुंसि । नृपात्मजो राजपुत्रो बुद्धः वराङ्गनागणकलिलं वराङ्गनानां श्रेष्ठस्त्रीणां गणैः समूहैः कलिलं युक्तम् । 'कलिलं गहनं मिश्र' मित्युणादिकोशः । तत् वनमभि वनं प्रतीत्यर्थः । 'अभिरभागे' इति कर्मप्रवचनीयसंज्ञायां 'कर्मप्रवचनीययुक्त' इति द्वितीया । बलात् नीयते स्म । तेन सारथिनेत्यर्थात् ।

इति श्रीमत्पण्डितराजवंशावतंसवैयाकरणशेखरश्रीमत्कान्ताचार्यसूरीणां छात्रेण
श्रीमत्सदाशिवबुधेन्द्रसूनुना राशिवडेकरेण श्रीअप्पाशर्मविद्यावाचस्पति-
विद्यालङ्कारमहोपदेशकेन विनिर्मितायां बालबोधिन्याख्यायां
बुद्धचरितव्याख्यायां तृतीयः सर्गः ॥
॥ श्रीसदाशिवार्पणमस्तु ॥

---

( १ ) अथ श्रीमतो बुद्धस्य परां धृतिमुपवर्णयितुं कामयमानः 'विकारहेतौ सति विक्रियन्ते येषां न चेतांसि न एव धीराः ।' इत्यभियुक्तोक्तेर्विकारहेतूनां सद्भा-

---

१ वराप्सरोनृत्यं, वरोप्सरो नृतिं ।

अभिगम्य च तास्तस्मै विस्मयोत्फुल्ललोचनाः।
चक्रिरे समुदाचारं पद्मकोशनिभैः करैः ॥ २ ॥

तस्थुश्च परिवार्यैनं मन्मथाक्षिप्तचेतसः।
निश्चलैः प्रीतिविकचैः पिबन्त्य इव लोचनैः ॥ ३ ॥

तं हि ता मेनिरे नार्यः कामो विग्रहवानिति।
शोभितं लक्षणैर्दीप्तैः सहजैर्भूषणैरिव ॥ ४ ॥

---

वस्यैव धैर्यनिकषायमाणत्वेन विकारहेतुभूतानि नारीजनचेष्टितादीनि सविशेषमुपदर्शयति तत इत्यादिभिस्त्रिपञ्चाशता पद्यैः।

तत इति। रथस्योपवनाभिमुखगमनानन्तरं कौतूहलचलेक्षणाः कौतूहलेन बलवताभिलाषेण चलानि ईक्षणानि नेत्राणि यासां तथाभूताः स्त्रिय उपवने स्थापिताः कन्यः प्राप्तं नृपसुतं राजपुत्रं बुद्धं वरं पतिमिव पुरोद्यानात् नगरोपवनात् प्रत्युज्जग्मुः प्रत्युद्गमनेन संभावयामासुः। वरमिवेत्युपमया तासां कामेनाकुलत्वं तदनुगुणव्यापारकारित्वं च ध्वन्यते।

(२) अभिगम्येति। च किंच विस्मयोत्फुल्ललोचनाः विस्मयेन लोकातिशायिनः सौन्दर्यादेरवलोकनतो जनितेनाश्चर्येण उत्फुल्ले विकसिते लोचने यासां तथाभूताः। उत्फुल्लशब्दश्च 'उत्फुल्लसंफुल्लयोरुपसंख्यानम्' इति वार्तिकात्साधुः। ताः स्त्रियः अभिगम्य समीपे गत्वा पद्मकोशनिभैः कमलकलिकासदृशैः करैः हस्तैः करणभूतैः तस्मै तं बुद्धमनुकूलयितुम्। क्रियार्थोपपदस्य चेति चतुर्थी। समुदाचारं कुसुमाञ्जलिविकरणादिकमुत्कृष्टमुपचारं चक्रिरे कृतवत्यः।

(३) तस्थुरिति। च किंच मन्मथाक्षिप्तचेतसः मन्मथेन मदनेन आक्षिप्तं आकृष्टं चेतो यासां तथाभूतास्ताः स्त्रियः प्रीतिविकचैः प्रीत्या अनुरूपपुरुषप्राप्तिजेन हर्षेण विकचैर्विकसितैः। 'मुत्प्रीतिः प्रमदो हर्ष' इत्यमरः। निश्चलैः एकाग्रत्वादचञ्चलैः लोचनैर्नेत्रैः करणभूतैः पिबन्त्य इव एनं बुद्धं परिवार्य वेष्टयित्वा तस्थुः। 'पपौ निमेषालसपक्ष्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्याम्।' इति रघुवंशे। क्रियोत्प्रेक्षालङ्कारः।

(४) किमित्येवं चक्रुरित्याह। तमिति। हि यस्मात्कारणात् ता नार्यः स्त्रियः कन्यः दीप्तैः दीप्तिशालिभिः सहजैः सहोत्पन्नैः स्वाभाविकैरकृत्रिमैर्भूषणैरिव लक्षणैश्चक्राद्यङ्कितकरत्वादिभिर्महापुरुषत्वज्ञापकैश्चिह्नैः शोभितं तं बुद्धं विग्रहवान् शरीरवान् 'विग्रहः समरे काये' इति विश्वः। कामो मदन इति मेनिरे। मूर्तिमन्तं मदनं मेनिर इत्यर्थः। 'निपातेनाभिहिते द्वितीयान्यतरस्याम्' इत्युक्तेः काम इति प्रथमा। अत एव परिवार्य तस्थुरिति भावः।

सौम्यत्वाच्चैव धैर्याच्च काश्चिदेनं प्रजज्ञिरे।
अवतीर्णो महीं साक्षात्सुधांशुश्चन्द्रमा इति ॥ ५ ॥
तस्य ता वपुषाक्षिप्ता निग्रहार्थं जजृम्भिरे।
अन्योन्यं दृष्टिभिर्गत्वा शनैश्च विनिशश्वसुः ॥ ६ ॥
एवं ता दृष्टिमात्रेण नार्यो ददृशुरेव तम्।
न व्याजह्रुर्न जहसुः प्रभावेणास्य यन्त्रिताः ॥ ७ ॥

---

(५) सौम्यत्वादिति। तासु च स्त्रीषु काश्चित् एनं राजकुमारं सौम्यत्वात् तीव्रेतरत्वात् प्रशान्तत्वादिति यावत् धैर्यात् धीरत्वाच्च हेतोः। धीरशब्दाद्भावे ष्यञ्। चन्द्रतुल्ययोर्धर्मयो राजपुत्रे विद्यमानत्वादिति भावः। महीं पृथ्वीं अवतीर्णः साक्षात्प्रत्यक्षतो दृश्यमानः सुधांशुः सुधा अमृतं अंशुषु किरणेषु यस्य तथाभूतः चन्द्रमाः चन्द्र इति प्रजज्ञिरे ज्ञातवत्यः। 'निपातेनाभिहिते' इति प्रथमा। अमायां क्षयरूपस्य पौर्णमास्यां कदाचिद्ग्रहणरूपस्य च महतो विघ्नस्य सत्त्वेऽपि जगत्प्रकाशनादिरूपाद्व्यवसायादचलनं धैर्यं चन्द्रमसि। बुद्धे तु मनोजयप्रवृत्तेरचलनादिरूपम्। 'व्यवसायादचलनं धैर्यं विघ्ने महत्यपी' ति हि धैर्यमालङ्कारिका व्याचक्षते। अलङ्कारः किलात्रोत्प्रेक्षा। न तु भ्रान्तिमान् उपमानस्याप्रसिद्धेः। संभावनस्यैव च विद्यमानत्वादिति।

(६) तस्येति। तस्य बुद्धस्य वपुषा शरीरेण शरीरसौभाग्येनेत्यर्थः। आक्षिप्ता आकृष्टास्ताः स्त्रियः निग्रहार्थं बुद्धस्य नियमनार्थं वशीकरणार्थमित्यर्थः जजृम्भिरे जृम्भां (गात्रविनामं) कृतवत्यः। जृभि गात्रविनाम इत्यतो लिट्। जृम्भायाश्च हृदयहरणक्षमत्वादनुष्ठानम्। यदाह पण्डितराजः 'वक्रीकृतभुजलतिको वक्रीकृतसंनमद्ग्रीवः। नो हरति कस्य हृदयं हरिणदृशो जृम्भणारम्भः।' इति। च किंच दृष्टिभिः करणभूताभिः अन्योन्यं गत्वा। दृशा अन्योन्यमालोक्येत्यर्थः परस्परावलोकनं च बुद्धविषयकस्यात्मनो भावस्याभिव्यञ्जनाय। शनैः मन्दं यथा तथा विनिशश्वसुः निश्वासान्मुमुचुः। एवंविधैर्विलासैरयं वशीकर्तुं शक्य इति संभावयन्तीनामित्थमनुष्ठानम्। एष च हावो नाम नारीणां यौवनजः सात्विकोऽलङ्कारः। तदुक्तं विश्वनाथेन 'भ्रूनेत्रादिविकारैस्तु संभोगेच्छाप्रकाशकः। भाव एवाल्पसंलक्ष्यविकारो हाव उच्यते॥' इति। भावस्तु 'निर्विकारात्मके चित्ते भावः प्रथमविक्रिया।' इति।

(७) एतासां विलासानामपि बुद्धे वैफल्यमाह। एवमिति। एवं किंच ता नार्यः दृष्टिमात्रेण केवलया दृशा ददृशुरेव। मनसा तु नैनं पस्पृशुरिति भाव.। एवकारव्यावर्त्यमाह नेति। अस्य बुद्धस्य प्रभावेण तेजसा यन्त्रिता निरुद्धा न व्याजह्रुः न किंचिदुक्तवत्यः। व्याङ्पूर्वो हरतिर्वचने। न जहसुः हास्यं कृतवत्यः। केवलं तु शून्येन मनसा तमवेक्षमाणास्तस्थुरिति भावः।

---

१ इव, सुधाशुरिव चन्द्रमाः। २ निग्रहीतुं।

तास्तथा तु निरारम्भा दृष्ट्वा प्रणयविक्लवाः।
पुरोहितसुतो धीमानुदायी वाक्यमब्रवीत् ॥ ८॥
सर्वाः सर्वकलाज्ञाः स्थ भावग्रहणपण्डिताः।
रूपचातुर्यसम्पन्नाः स्वगुणैर्मुख्यतां गताः ॥ ९॥
[1]शोभयेत गुणैरेभिरपि तानुत्तरान् कुरून्।
कुबेरस्यापि चा[2]क्रीडं प्रागेव वसुधामिमाम् ॥ १०॥
शक्ताश्चालयितुं यूयं वीतरागानृषीनपि।
अप्सरोभिश्च कलितान् ग्रहीतुं विबुधानपि ॥ ११॥

(८) ता इति। तु किन्तु प्रणयविक्लवाः प्रणयेन बुद्धे प्रयुक्तेन विह्वला व्याकुलतां प्राप्ताः तत एवच तथा पूर्वोक्तप्रकारेण निरारम्भाः उद्यमशून्याः ताः दृष्ट्वा। 'आरम्भस्तु त्वरायां स्यादुद्यमे' इति मेदिनी। पुरोहितसुतः राज्ञः पुरोहितस्य पुत्रः धीमान् बुद्धिमान् उदायी एतन्नामा पुरुषः वाक्यं अब्रवीत्। ब्रुवो लङि'ब्रुव ईडि'तीट्।

(९) किं तद्वाक्यं तदाह सर्वा इति। सर्वा यूयं सर्वकलाभिज्ञाः सर्वासु कलासु नृत्यगीतादिषु चतुःषष्टिमितासु तावतीषु वा कामकलासु अभिज्ञाः पण्डिताः। कलानामानि च कामसूत्रतोऽवगन्तव्यानि। विस्तरभिया नात्र निर्देष्टुं शक्यन्ते। भावग्रहणपण्डिताः भावस्य इष्टपुरुषमनसो ग्रहणे कर्षणे स्वाभिमुखीकरण इति यावत् पण्डिताः रूपचातुर्यसंपन्नाः प्रशस्तेन रूपेण चातुर्येण च युक्ताः स्वगुणैः करणभूतैः मुख्यतां गताः श्रेष्ठतां प्राप्ताः स्थ। एतेन भवतीनामेतन्निर्व्यापारत्वं नाशक्तिमूलकमिति व्यज्यते। एवमुत्तरत्रापि। भावपदस्य मनोवाचकता तु 'मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम्।' इत्यादिषु व्याघ्रपादादिवचनेषु द्रष्टव्यम्।

(१०) पुनश्च प्रशंसति त्रिभिः। शोभयेतेति। एभिः पूर्वोक्तैर्गुणैः तान् पुराणादिषु प्रसिद्धान् उत्तरान् कुरून् एतत्संज्ञकं देशं अपि शोभयेत विभूषयितुं शक्नुयात। 'शकि लिङ्चे'ति लिङ्। च किंच कुबेरस्यापि आक्रीडं उद्यानं शोभयेतेत्यनुवर्तते। 'पुमानाक्रीड उद्यानम्' इत्यमरः। प्रागेव ततः पूर्वमेव इमां वसुधां पृथ्वीं शोभयेत। भवत्यः किल स्वीयैर्गुणैरुत्तरान्कुरून् कुबेरस्यापि चोद्यानं विभूषयितुं प्रभवेयुः का कथा अस्या भूमेरिति भावः। उत्तरास्तु कुरवः संप्रति 'युनायटेड्स्टेट्' इति ख्याताः। यथा चैतत्तथा साधितं प्राचां भूगोलविज्ञानेऽस्माभिः। 'दक्षिणेन तु नीलस्य मेरोः पार्श्वे तथोत्तरे। ऊत्तराः कुरवो नाम रम्याः सिद्धनिषेविताः।' इति पद्मपुराणम्।

(११) शक्ता इति। यूयं कर्त्र्यः वीतरागान् विशेषेण इतो गतो रोगो वैषयिकं प्रेम येभ्यस्तथाभूतान्। अत्यन्तं विरक्तानित्यर्थः। अपि ऋषीन् चालयितुं चलितचित्ततां नेतुं शक्ताः। च किं च अप्सरोभिः स्वर्वेश्याभिः कलितान् युक्तान्

१ शोभयत। २ च क्रीडं।

भावज्ञानेन हावेन चातुर्याद्रूपसंपदा।
स्त्रीणामपि[1] च शक्ताः स्थ संरागे किं पुनर्नृणाम्?॥ १२॥
तासामेवंविधानां वो नियुक्तानां स्वगोचरे।
इयमेवंविधा चेष्टा? न तुष्टोऽस्म्यार्जवेन वः॥ १३॥
इदं नववधूनां वो ह्रीनिकुञ्चितचक्षुषाम्।
सदृशं चेष्टितं हि स्याद्यदि[2] वा गोपयोषिताम्॥ १४॥
यद्यपि स्यादयं वीरः प्रभावेण[3] महानिव।
स्त्रीणामपि महत्तेजस्तथापीत्यवधार्यताम्[4]॥ १५॥

विबुधान् (विशेषतो ज्ञानसंपन्नान्) देवानपि। 'त्रिदशा विबुधाः सुराः' इत्यमरः। ग्रहीतुं वशीकर्तुं शक्ताः स्थ। का कथा विषयवर्तिनोऽस्य राजकुमारस्येति भावः।

(१२) भावेति। भावस्य परमनसि संजातस्य कामविकारस्य **ज्ञानेन**, हावेन संभोगेच्छाप्रकाशिकाभिश्चेष्टाभिः, चातुर्यात् चतुरतया रूपसंपदा सौन्दर्यसमृद्ध्या च स्त्रीणामपि संरागे संरञ्जने अनुरागोत्पादन इत्यर्थः। शक्ताः **स्थ**। **नृणां** पुरुषाणां पुनः किम्? संरागे शक्ताः स्थेति किमु वक्तव्यमिति भावः। **पुरुषकामुका** नार्योऽपि भवतीः समालोक्य पुरुषवत्कामाकुलाः स्युः किं पुनः पुमांस इति **भावः**।

(१३) तासामिति। तासां स्वैर्गुणैः प्रसिद्धानां मदुपवर्णितप्रकारवतीनां स्वगोचरे स्वस्य गोचरे पुरुषवशीकरणरूपे विषये नियुक्तानां वः युष्माकं इयं **मया** प्रत्यक्षीक्रियमाणा एवंविधा ईदृशी वशीकरणप्रतिकूलेत्यर्थः। चेष्टा व्यापारः (क्रिया)। प्रश्ने काकुः। अयुक्तमेतदिति भावः। वः युष्माकं आर्जवेन सरलतया न तुष्टोऽस्मि। आर्जवमिति 'इगन्ताच्च लघुपूर्वादि'त्यण् भावे।

(१४) इदमिति। ह्रीनिकुञ्चितचक्षुषाम् ह्रिया लज्जया निकुञ्चितानि संकोचमनुप्राप्तानि चक्षूंषि दृष्टयो यासां तथाभूतानां नववधूनां नवस्त्रीणां तरुणीनामित्यर्थः - व इदं संदृश्यमानं चेष्टितं चेष्टा। भावेक्तः। आचरणमित्यर्थः। हि निश्चयेन **यदिवा** कदाचित् गोपयोषितां गोपालस्त्रीणां सदृशं योग्यं स्यात्। नैव तु भवादृशीनां विलासिनीनामिति भावः। 'सदृशं समे। उचिते च' इति मेदिनी। निकुञ्चितानि कुटिलानीत्यपि भवेदर्थः। किन्तु ह्रिया संकोच एव दृष्टेः संपद्यत इति द्रष्टव्यम्।

(१५) ननु भो महाप्रभावोऽयं तत्किमत्र कुर्म इति चेत्तत्राह। यद्यपीति। यद्यपि अयं वीरः शूरः राजपुत्रः। 'कः शूरो यो ललनालोचनबाणैर्न च व्यथितः' इति प्रश्नोत्तररत्नमालिका। प्रभावेण महानिव स्यात्। न तु वस्तुतो **महानिति** भावः। प्रभावेणेति प्रकृत्यादित्वात्तृतीया। तथापि स्त्रीणामपि तेजः प्रभावः। **महत्** इति अवधार्यतां निश्चीयतां युष्माभिरिति शेषः। तदलमात्मावमाननेनेति **भावः**।

१ स्त्रीणा-मेव च। २ दपि वा। ३ श्रीप्रभावान्महानिति। ४ इति कार्योऽत्र निश्चयः।

पुरा हि काशिसुन्दर्या वेशवध्वा महानृषिः।
ताडितश्चरणेनासीद्दुराधर्षः सुरैरपि ॥ १६ ॥

गान्धारगौतमो[1] भिक्षुर्जङ्घया वारमुख्यया[2]।
पिप्रीषुश्च तदर्थार्थं[3] व्यसून्निरहरत्पुरा ॥ १७ ॥

गोतमं[4] दीर्घतपसं महर्षिं दीर्घजीविनम्।
योषित्सन्तोषयामास वर्णस्थानावरा सती ॥ १८ ॥

ऋष्यशृङ्गं मुनिसुतं तथैव स्त्रीष्वपण्डितम्।
उपायैर्विविधैः शान्ता जग्राह विजहार[5] च ॥ १९ ॥

---

( १६ ) उक्तमर्थमैतिह्यैर्द्रढयति । पुरेति । हि यतः पुरा पूर्वस्मिन्काले काशिसुन्दर्या एतत्संज्ञया वेशवध्वा वेशस्य वेश्याजननिवासस्य संबन्धिनी वधूः स्त्री तया वेश्ययेत्यर्थः । कर्त्र्या । सुरैरपि दुराधर्षः दुःखेन आधर्षितुं अभिभवितुं शक्यः । दुरभिभव इत्यर्थः महान् ऋषिः कोपि मुनिः चरणेन ताडितः आसीत् । स्पष्टश्चातः स्त्रीणां प्रभाव इति भावः । 'वेशो वेश्याजनसमाश्रय' इत्यमरः ।

( १७ ) उदाहरणान्तरमाह । गान्धारेति । च किंच । गान्धारगौतमः भिक्षुः गान्धारदेशप्रभवो गौतमो नाम यतिः कर्ता वारमुख्यया जनैः सत्कृतया वेश्यया । 'सा ( वेश्या ) जनैः । सत्कृता वारमुख्या स्यात्' इत्यमरः । जङ्घया एतन्नामया नार्या सह । आर्षेऽपि सहयोगे तृतीया 'वृद्धो यूने' त्यादिनिर्देशात् । पिप्रीषुः प्रेतुं प्रीतिमनुभवितुमिच्छुः सन् । रन्तुमिच्छुः सन्नित्यर्थः । प्रीङ् प्रीतावित्यतो दैवादिकात्सन्नन्ता 'त्सनाशंसभिक्ष' इत्युः । प्रीङः सकर्मत्वेऽपि अर्थान्तरसमाश्रयणादकर्मकता । तदाहुः 'धातोरर्थान्तरे वृत्ते धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ।' इति । तदर्थार्थं तस्या जङ्घायाः ( प्रदेयस्य ) अर्थस्य द्रव्यस्यार्थम् पुरा पूर्वकाले व्यसून् विगता असवः प्राणा येभ्यस्तान् ( प्रेतान् ) निरहरत् उवाह । निर्पूर्वो हरतिः प्रेतवहने ।

( १८ ) गोतममिति । अन्यच्च दीर्घतपसं दीर्घं विपुलमित्यर्थः तपो यस्य तथाभूतं दीर्घजीविनं दीर्घं कालं जीवति दीर्घजीवी तं महर्षिं गोतमं वर्णस्थानावरा वर्णस्थानेन ब्राह्मणादिवर्णरूपेण स्थानेन अवरा हीना सती । हीनजातीया सत्यपीत्यर्थः । योषित् काचन स्त्री संतोषयामास । हीनवर्णभवाऽपि महर्षेः संतोषं जनयितुं प्रबभूवेत्यहो प्रभावः स्त्रीणामिति भावः । गौतमं दीर्घतमसमिति पाठे गोतमकुलोत्पन्नं दीर्घतमसं नाम महर्षिमित्यर्थः ।

( १९ ) ऋष्यशृङ्गमिति । तथैव शान्ता अङ्गदेशाधिपतिना रोमपादेनाऽपत्यतां गमिता राज्ञो दशरथस्य पुत्री कर्त्री । 'कन्यां दशरथो राजा शान्तां नाम

---

१ मथालगौतमो, गोतमो । २ बालमुख्यया । ३ तदर्थाय । ४ गौतमं । ५ जग्राह च जहार ।

विश्वामित्रो महर्षिश्च विगाढोऽपि महत्तपः ।
दश वर्षाण्यरण्यस्थो घृताच्याप्सरसा हृतः ॥ २० ॥
एवमादीनृषींस्तांस्तान्नयन्ते विक्रियां स्त्रियः ।
ललितं पूर्ववयसं किं पुनर्नृपतेः सुतम् ॥ २१ ॥
तदेवं सति विस्रब्धं प्रयतध्वं तथा यथा ।
इयं नृपस्य वंशश्रीरितो न स्यात्पराङ्मुखी ॥ २२ ॥

व्यजीजनत् । अपत्यकृतिकां राज्ञे रोमपादाय यां ददौ ।' इत्युत्तररामचरितम् । स्त्रीषु विषये अपण्डितं अनभिज्ञम् । यथा चैतत्तथा वाल्मीकीयरामायणे बालकाण्डे दशमे सर्गे स्पष्टम् । मुनिसुतं विभाण्डकस्य नाम मुनेः पुत्रं ऋष्यशृङ्गं एतन्नामानं मुनिं विविधैः नानाप्रकारैः उपायैः जग्राह वशीचकारेत्यर्थः । च विजहार रमयामासेत्यर्थः । विपूर्वाद्धरतेरन्तर्भावितण्यर्थाल्लिट् । यद्वा तेन सहेत्यध्याहारः । अन्तर्भावितण्यर्थताङ्गीकार एव त्वत्र ज्यायान्प्रतिभाति । 'कश्यपस्य तु पुत्रोऽस्ति विभाण्डक इति श्रुतः । ऋष्यशृङ्ग इति ख्यातस्तस्य पुत्रो भविष्यति' इति रामायणम् । (बा. कां. ९।३) पुरा किलावृष्ट्योपद्रुतेष्वङ्गेषु राजा लोमपादः स्वाध्यायमात्रनिरतं स्त्रीविषयादिवार्तानभिज्ञं विभाण्डकस्य मुनेः पुत्रमृष्यशृङ्गं वेश्याभिर्विलोभ्यात्मनो राष्ट्रमानाययामास । अपत्यकृतिकां चात्मनोऽस्मै शान्तां प्रायच्छत् । इत्यादिकं रामायणे द्रष्टव्यम् ।

(२०) विश्वामित्र इति । च किंच । महर्षिः विश्वामित्रः विश्वं मित्रमस्य एतन्नामा । 'मित्रे चर्षौ' इति दीर्घः । दश वर्षाणि अरण्यस्थः अरण्ये तिष्ठन् । वर्षाणीति 'कालाध्वनोरत्यन्तसंयोग' इति द्वितीया । महत् तपः विगाढः प्रविष्टः अपि । विपुलं तपश्चीर्णवानपीत्यर्थः । घृताच्या नाम अप्सरसा स्वर्वेश्यया हृतः आकृष्टः वशीकृत इत्यर्थः । अप्सरःशब्दो बहुवचनान्त इति तु प्रायोवादः । 'अनचि चे'ति सूत्रे अप्सरा इति भाष्य एकवचनप्रयोगात् । 'स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा अपि ।' इति शब्दार्णवः ।

(२१) एवमादीनिति । स्त्रियः कर्त्र्यः एवमादीन् एवमुपर्युक्तप्रकारा मुनय आदयो मुख्या येषु तथाभूतान् तांस्तान् अनेकान्प्रसिद्धान् ऋषीन् एतेन वशीकरणस्याशक्यत्वं ध्वन्यते । विक्रियां विकारं मदनविकारमित्यर्थः । नयन्ते प्रापयन्ति । ललितं सुन्दरं, पूर्ववयसं पूर्वं प्रथमं वयो यस्य तथाभूतं तरुणमित्यर्थः । नृपतेः राज्ञः सुतं पुत्रं किं पुनः ? तं विकारं नयेरन्निति किमु वक्तव्यमिति भावः । अत्र ललितमित्यादिभिस्त्रिभिरुत्तरोत्तरं विकारजननस्याधिकं सौकर्यं ध्वन्यते ।

(२२) अनुष्ठेयमाह । तदिति । तत् तस्मात् एवं उक्ते प्रकारे विद्यमाने सति उपरिनिर्दिष्टस्य प्रकारस्य विद्यमानत्वादिति भावः । विस्रब्धं विस्रम्भयुक्तं यथास्या-

१ विगाधो । २ताननयन् ।

याश्च[1] काश्चिद्युवतयो हरन्ति सदृशं जनम्।
निकृष्टोत्कृष्टयोर्भावं यास्तु[2] गृह्णन्ति ताः स्त्रियः ॥ २३ ॥
इत्युदायिवचः श्रुत्वा ता विद्धा इव योषितः।
समारुरुहुरात्मानं कुमारग्रहणं प्रति ॥ २४ ॥
ता भ्रूभिः प्रेक्षितैर्भावैर्हसितैर्ललितैर्गतैः।
चक्रुराक्षेपिकाश्चेष्टा भीतभीता इवाङ्गनाः ॥ २५ ॥
राज्ञश्च[3] विनियोगेन कुमारस्य च मार्दवात्।
जहुः[4] क्षिप्रमविस्रम्भं मदेन मदनेन च ॥ २६ ॥

---

त्तथा निर्विशङ्कं यथा स्यात्तथेत्यर्थः। तथा प्रयतध्वं यत्नं कुरुत यथा इयं संप्रति सर्वतः संदृश्यमाना नृपस्य राज्ञः शुद्धोदनस्य वंशश्रीः वंशगता लक्ष्मीः इतः अस्माद्वंशात्पराङ्मुखी न स्यात्। यदि हि न स्यात्कामकलायां कृतानुरागो राजकुमारस्तदा दुर्घटमेव राज्ञो वंशश्रियोऽत्रावस्थानमिति प्राप्यतामेष विकारमिति भावः।

(२३) पुनश्च प्रोत्साहयति। याश्चेति। याश्चकाश्चित् सर्वा अपीत्यर्थः। युवतयः तरुण्यः कर्त्र्यः सदृशं आत्मनः समानं जनं हरन्ति कर्षन्ति वशीकुर्वन्तीत्यर्थः। सकलसाधारणमेतदिति भावः। तु किन्तु याः निकृष्टोत्कृष्टयोः निकृष्टः अरसिकत्वाज्जघन्यः उत्कृष्टः आत्मनोऽप्यपेक्षया विलासकुशलत्वाच्छ्रेष्ठः तयोर्भावं मनः गृह्णन्ति हरन्ति तास्ता एवेत्यर्थः स्त्रियः। न पुनरन्या इत्यर्थः। अत्र भावग्राहिकाणां तदितरासां च स्त्रीणां भेदाभावेऽपि भेदोक्तेरतिशयोक्तिः। केचित्पुनरेवंविधेषु स्थलेषु विध्यलङ्कारमाचक्षते। लक्षयन्ति च 'सिद्धस्यैव विधानं यत्तामाहुर्विध्यलङ्कृतिम्।' इति।

(२४) इतीति। इति एवंप्रकारं उदायिवचः उदायिनो नाम पुरोहितपुत्रस्य वचनं श्रुत्वा विद्धाः कृतक्षता इव ता योषितः स्त्रियः कर्त्र्यः कुमारग्रहणं प्रति कुमारस्य वशीकरणविषये आत्मानं यत्नं समारुरुहुः आरूढवत्यः। प्रयत्नमाश्रितवत्य इत्यर्थः। 'आत्मा चित्ते धृतौ यत्ने' इति हैमः।

(२५) ता इति। ता अङ्गनाः स्त्रियः भीतभीता इव भीततुल्या इव सत्यः 'प्रकारे गुणवचनस्ये'ति द्विर्वचनम्। 'भीतभीत इव शीतदीधितिः' इति माघः। भ्रूभिः भावैः हस्तादिभिर्मनोगताभिप्रायाणां सूचनैः हसितैर्हास्यैः ललितैः सुकुमारतया अङ्गानां विन्यासैः। 'सुकुमारतयाऽङ्गानां विन्यासो ललितं भवेत्' इति विश्वनाथः। गतैः गमनैश्च करणभूतैः आक्षेपिकाः बुद्धस्य आकर्षिकाः तद्वशीकरणप्रयोजिका इत्यर्थः। चेष्टाः क्रियाश्चक्रुः।

(२६) राज्ञ इति ता अङ्गना इत्यनुवर्तते। राज्ञः विनियोगेन विशिष्टेन आदेशेन हेतुभूतेन। च किंच कुमारस्य राजपुत्रस्य बुद्धस्य मार्दवात् मृदुत्वात्

---

१ या हि। २ या गृह्णन्ति तु। ३ राज्ञस्तु। ४ जहुः।

अथ नारीजनवृतः कुमारो व्यचरद्वनम्।
वाशितायूथसहितः करीव हिमवत्तटम्॥ २७॥
स तस्मिन्कानने रम्ये जज्वाल स्त्रीपुरःसरः।
आक्रीड इव वैभ्राजे विवस्वानप्सरोवृतः॥ २८॥
मदेनावर्जिता नाम तं काश्चित्तत्र योषितः।
कठिनैः पस्पृशुः पीनैः संघट्टैर्वल्गुभिः स्तनैः॥ २९॥
स्रस्तांसकोमलालम्बिमृदुबाहुलताऽबला।
अनृतं स्खलितं काचित्कृत्वैनं सस्वजे बलात्॥ ३०॥

---

हेतोः। मदेन मद्यपानादिजन्येन, च किंच मदनेन हृदयवर्तिना कामेन हेतुभूतेन क्षिप्रं सत्वरं अविस्रम्भं कुमारविषयकमविश्वासं नायं वशी भविष्यतीत्येवंरूपं जहुः त्यक्तवत्यः। त्यागार्थकाज्जहातेर्लिट्। 'विस्रम्भः केलिकलहे विश्वासे प्रणयेऽपि च।' इति मेदिनी। अवश्यमेनं वशयिष्याम इति विश्वासमारूढवत्य इत्यर्थः। अविस्रम्भं संदेहमिति वा।

(२७) अथेति। अथ अविस्रम्भत्यागानन्तरं नारीजनवृतः नारीणां जनेन समूहेन वृतो वेष्टितः कुमारो बुद्धः कर्ता, वाशितायूथसहितः वाशितानां करिणीनां यूथेन समूहेन सहितः करी गजः हिमवत्तटं हिमालयस्य तटमिव वनं व्यचरत् विचचार। विपूर्वकस्य चरतेः संचरणार्थकत्वेपि सकर्मकत्वमेव स्वीक्रियते प्रायशः कविभिः। यथा कालिदासः 'अधिज्यधन्वा विचचार दावम्।' इति। 'वाशिता स्त्रीकरिण्योश्च' इत्यमरः।

(२८) स इति। स्त्रीपुरःसरः स्त्रीणां पुरोगः। 'पुरोग्रतोग्रेषु सर्तेरि'ति टच्। स बुद्धः कर्ता अप्सरोवृतः अप्सरोभिः परिवृतः विवस्वान् सूर्यः वैभ्राजे एतत्संज्ञके आक्रीडे उद्याने इव तस्मिन् कानने उपवने जज्वाल दिदीपे अत्यन्तं शुशुभ इत्यर्थः। 'देवोद्यानानि वैभ्राजं' इत्यादित्रिकाण्डशेषः। 'पुमानाक्रीड उद्यानं' इत्यमरः।'

(२९) अथ वशीकरणे प्रवृत्तानां स्त्रीणामुद्यमप्रकारमाह चतुर्विंशत्या। मदेनेति। तत्र तस्मिन्कानने काश्चित् योषितः स्त्रियः मदेन मद्यपानादिजन्येनेन्द्रियवैक्लव्येन आवर्जिता गृहीता आक्रान्ता इति यावत्। नामेति प्राकाश्ये। मदावर्जितत्वमात्मनः प्रकाशयन्त्य इत्यर्थः। संघट्टैः संघट्टनैः गात्रसंघर्षणमिषेणेत्यर्थः। कठिनैः पीनैः स्थूलैः वल्गुभिः सुन्दरैः स्तनैः करणभूतैः पस्पृशुः स्पृष्टवत्यः। स्पृशतेर्लिट्। 'चारु हारि रुचिरं मनोहरं वल्गु' इति हैमः।

(३०) स्रस्तेति। स्रस्तांसकोमलालम्बिमृदुबाहुलता स्रस्तौ अवगलिताविव अंसौ स्कन्धौ ताभ्यां कोमलं सुकुमारं यथा तथा आलम्बिन्यौ लम्बमाने मृदू सुकु-

---

१ वासिता। २ हिमवद्वनम्। ३ नभ्राजे, विभ्राजे। ४ लम्ब।

काचित्ताम्राधरोष्ठेन मुखेनासवगन्धिना।
विनिशश्वास कर्णेऽस्य रहस्यं श्रूयतामिति ॥ ३१ ॥
काचिदाज्ञापयन्तीव प्रोवाचार्द्रानुलेपना।
इह भुक्तिं कुरुष्वेति हस्तं संश्लिष्य लिप्सया ॥ ३२ ॥
मुहुर्मुहुर्मदव्याजस्रस्तनीलांशुकाऽपरा।
आलक्ष्यरशना[1] रेजे स्फुरद्विद्युदिव क्षपा ॥ ३३ ॥
काश्चित्कनककाञ्चीभिर्मुखराभिरितस्ततः।
बभ्रमुर्दर्शयन्त्योऽस्य श्रोणीस्तन्वंशुकावृताः ॥ ३४ ॥

मारे बाहुलते यस्यास्तथाभूता काचित् अबला स्त्री अनृतं मिथ्याभूतं स्खलितं कृत्वा मिथ्यै व स्खलितमात्मानं प्रदर्श्येत्यर्थः। एनं बुद्धं बलात् सस्वजे आलिङ्गितवती। स्वञ्जेरालिङ्गनार्थाल्लिट्।

(३१) काचिदिति। काचित् स्त्री ताम्राधरोष्ठेन ताम्रः अधर ओष्ठो यत्र तथाभूतेन। 'ओत्वोष्ठयोः समासे वे'ति पररूपम्। आसवगन्धिना आसवस्य मद्यस्य गन्धः अस्त्यस्मिंस्तथाभूतेन। 'अत इनिठना'विति मत्वर्थे इनिः। मुखेन करण-भूतेन रहस्यं रहसि कथयितुं योग्यं वचः श्रूयतां इति उक्त्वेति शेषः। अस्य बुद्धस्य कर्णे विनिशश्वास विशिष्टं निश्वासं मुमोच।

(३२) काचिदिति। आर्द्रानुलेपना आर्द्रं अनुलेपनं अङ्गरागो यस्यास्तथा-भूता काचित् स्त्री लिप्सया बुद्धं लब्धुमिच्छया हेतुभूतया। लभेः सनि 'सनिमीमे' त्यादिना इसि 'अप्रत्यया' दित्यप्रत्यये टापि च लिप्सेति रूपम्। हस्तं बुद्धस्येत्यर्थात् संश्लिष्य आत्मनः करेण संसृज्य इह अस्मिन्मच्छरीरे अत्र प्रदेशे वा भुक्तिं उपभोगं कुरुष्व। मामुपभुङ्क्ष्वेत्यर्थः। इति आज्ञापयन्तीव आज्ञां कुर्वतीव प्रोवाच प्रकर्षेण उक्तवती।

(३३) मुहुरिति। मुहुर्मुहुः वारंवारं मदव्याजस्रस्तनीलांशुका मदस्य मद्य-पानजन्येन्द्रियवैक्लव्यस्य व्याजेन मिषेण स्रस्तं गलितं (स्वस्थानादीषत्परिभ्रष्टं) नीलं अंशुकं परिधानवस्त्रं यस्याः तथाभूता अत एव आलक्ष्यरशना आ ईषल्लक्षयितुं शक्या रशना काञ्ची यस्यास्ताभूता। 'मेखला काञ्ची सप्तकी रशना तथे'त्यमरः। अपरा स्त्री स्फुरद्विद्युत् स्फुरन्ती विद्युद्यस्यां तथाभूता क्षपा रात्रिः। तमस्विनीति यावत्। इव रेजे शुशुभे। बिम्बप्रतिबिम्बभावेनोपमालङ्कारः।

(३४) काश्चिदिति। काश्चित्स्त्रियः कर्त्र्यः मुखराभिः शब्दायमानाभिः कनक-काञ्चीभिः सुवर्णमयीभिर्मेखलाभिः उपलक्षिताः। उपलक्षणे तृतीया। तन्वंशुकावृताः तनुना सूक्ष्मेण अंशुकेन वस्त्रेण आवृताः आच्छन्नाः श्रोणीः जघनप्रदेशान् अस्य बुद्धस्य बुद्धायेत्यर्थः। शेषे षष्ठी। दर्शयन्त्यः सत्यः इतस्ततो बभ्रमुः भ्रमणं चक्रुः।

१ रसना।

चूतशाखां कुसुमितां गृ[1]हीत्वाऽन्या ललम्बिरे ।
सुवर्णकलशा[2]भिख्यान्स्फोर[3]यन्त्यः पयोधरान् ॥ ३५ ॥
काचित्पद्मवनादेत्य सपद्मा पद्मलोचना ।
पद्मवक्त्रस्य पार्श्वेऽस्य पद्मेवा[4]सीद्वितस्थुषी ॥ ३६ ॥
ल[5]लितं गीतमन्वर्थं काचित्साभिनयं जगौ ।
स्व[6]स्थं तं सूचयन्तीव वञ्चितोऽसीति[7] वीक्षितैः ॥ ३७ ॥

---

( ३५ ) चूतेति । अन्याः स्त्रियः कर्त्र्यः कुसुमितां संजातकुसुमां । तारकादित्वादितच् । चूतशाखां आम्रवृक्षस्य शाखाम् । 'आम्रश्चूतो रसालोऽसौ' इत्यमरः । गृहीत्वा । सुवर्णकलशाभिख्यान् सुवर्णमयानां घटानामिव अभिख्या शोभा येषां तथाविधान् । 'अभिख्या नामशोभयोः' इत्यमरः । पयोधरान् स्तनान् । स्फोरयन्त्यः स्फुरितान् कुर्वत्यः सत्यः । हेतौ शता । ललम्बिरे । शाखास्वित्यर्थात् । स्तनप्रदर्शनार्थमाम्रशाखां तरुगतां करे गृहीत्वा ललम्बिरे इति भावः ।

( ३६ ) काचिदिति । सपद्मा कमलसहिता काचित् पद्मलोचना कमलसदृशनेत्रा स्त्री पद्मवनात् कमलवनात् एत्य आगत्य पद्मवक्त्रस्य पद्मं कमलमिव मनोहरं वक्त्रं मुखं यस्य तथाभूतस्य अस्य बुद्धस्य पार्श्वे समीपे पद्मा लक्ष्मीरिव वितस्थुषी विशेषेण स्थितवती आसीत् । 'क्वसुश्चे'ति तिष्ठतेः क्वसौ 'उगितश्चे' ति ङीप् । 'लक्ष्मीः पद्मालया पद्मे'त्यमरः । उपमालङ्कारः । एतेन स्त्रियः सौन्दर्यातिशयो द्योत्यते ।

( ३७ ) ललितमिति । काचित् स्त्री स्वस्थं स्वस्मिन्प्रकृतौ तिष्ठति तथाभूतं विकारशून्यमित्यर्थः तं बुद्धं, वञ्चितोऽसि प्रतारितोऽसि दैवेनेति शेषः । नारीजनसमागमजन्यानन्दवैमुख्यादिति भावः । इति वीक्षितैः आलोकनैः करणभूतैः । विपूर्वादीक्षतेर्भावे क्तः । सूचयन्तीव ज्ञापयन्तीव अन्वर्थं यथार्थं ललितं ललिताख्यरागिणीविशिष्टं गीतम् । ललितमित्यन्वर्थसंज्ञं मनोहरत्वरूपेण ललितपदार्थेन विशिष्टत्वादिति भावः । साभिनयं अभिनयो हस्तादिभिरवस्थाया अनुकरणं तेन सहितं यथा तथा । 'भवेदभिनयोऽवस्थानुकार' इति दर्पणम् । जगौ गीतवती । गै शब्द इत्यतो लिट् । अन्वर्थं साभिनयमिति वा योजना । अन्वर्थमर्थानुसारि यथा तथा साभिनयं । अर्थानुसारित्वं चाभिनयान्वयि । गीतगतमर्थमभिनीयेत्यर्थः । एतत्पक्षे ललितं मनोहरमित्येव वार्थः कल्प्यः । पक्षान्तरे तु अर्शआदित्वादच् । 'नीलाम्बरी मुखारी च भैरवी ललिता तथा । * * * सावेरीराग इत्येताः सर्वदा च सुखावहाः । ' इति संगीतपारिजातः । अस्याश्च लक्षणं तत्रैव 'या गौरीरागसंभूता ललिता पञ्चमोज्झिता । सांशोद्ग्राहा तथा मान्ता गीतान्ते सा सुशोभना । ' इति ।

---

१ प्रगृह्य । २ सुवर्णकलशप्रख्यान् । ३ दर्शयन्त्यः । ४ पद्मश्रीरिव तस्थुषी । ५ मधुरं । ६ तं स्वस्थं चोदयन्तीव । ७ त्यवेक्षितैः ।

शुभेन वदनेनान्या भ्रूकार्मुकविकर्षिणा ।
प्रावृत्यानुचकारास्य चेष्टितं धीरलीलया ॥ ३८ ॥
वल्गत्पीनस्तनी काचिद्वाताघूर्णितकुण्डला ।
उच्चैरवजहासैनं समाप्नोतु भवानिति ॥ ३९ ॥
अपयान्तं तथैवान्या बबन्धुर्माल्यदामभिः ।
काश्चिच्चाक्षेपमधुरैर्जगृहुर्वचनाङ्कुशैः ॥ ४० ॥
प्रतियोगार्थिनी काचिद्गृहीत्वा चूतवल्लरीम् ।
प्रसूनमेतत्कस्येति पप्रच्छ मदविह्वला ॥ ४१ ॥

---

( ३८ ) शुभेनेति । अन्या स्त्री प्रावृत्य परिभ्रम्य । प्राङ्पूर्वाद्वृतेः क्त्वो ल्यप् प्रावरणं गृहीत्वेति वा । अत्र चार्थे प्राङ्पूर्वात् वृणोतेः क्त्वो ल्यप् । भ्रूकार्मुकविकर्षिणा भ्रूरेव कार्मुकं धनुः तत् विकर्षति नमयति तथाभूतेन वक्रीकृतभ्रुणेत्यर्थः । शुभेन शोभनेन वदनेन मुखेन करणभूतेन अस्य बुद्धस्य चेष्टितं व्यापारं धीरलीलया धीरा प्रगल्भा या लीला केलिस्तया अनुचकार अनुकृतवती । प्रगल्भामेतदनुकरणकेलिं चकारेति भावः । ‘लीला केलिविलासयोः’ इति मेदिनी । दृश्यते किलाङ्पूर्वकस्य वर्तेर्गमनार्थकता ‘प्रत्यावृत्तः पुनरिव स मे जानकीविप्रयोगः ।’ इत्यादौ । एतेन लीलाख्यो नायिकालङ्कार उक्तः । यदाहुः ‘अङ्गैर्वेषैरलङ्कारैः प्रेमभिर्वचनैरपि । प्रीतिप्रयोजितैर्लीलां प्रियस्यानुकृतिं विदुः ।’ इति ।

( ३९ ) वल्गदिति । वल्गत्पीनस्तनी वल्गन्तौ चलन्तौ पीनौ पृथुलौ स्तनौ यस्यास्तथा भूता । ‘स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्’ इति वा ङीष् । वाताघूर्णितकुण्डला वातेन आघूर्णिते परिभ्रमिते कुण्डले यस्यास्तथाभूता काचित्स्त्री एनं बुद्धं ‘भवान् समाप्नोतु समाप्तिं (अवसानं) गच्छतु’ विविधस्त्रीसंभोगरूपस्य जीवितफलस्याभिलाषाभावादिति भावः । इति उक्त्वेति शेषः । उच्चैः अवजहास उपहसितवती ।

( ४९ ) अपयान्तमिति । तथैवेति किंचेत्यर्थे । अन्याः स्त्रियः अपयान्तं प्रारब्धप्रतिगमनं एनमिति शेषः । अपयानं च प्रतिगमनम् । माल्यदामभिः पुष्पमालारूपैर्बन्धनरज्जुभिः । ‘न पुंसि दाम संदान’ मित्यमरः । बबन्धुः बद्धवत्यः । च किंच काश्चित् आक्षेपमधुरैः आक्षेपेण भर्त्सनेन मधुरैर्मनोहरैः वचनाङ्कुशैः वचनरूपैरङ्कुशैः एनमिति शेषः । जगृहुः निगृहीतवत्यः । गृह्णातिश्चात्र निग्रहार्थः । वचनेष्वङ्कुशत्वारोपेण बुद्धे गजत्वारोपः प्रतीयते । तेन एकदेशविवर्ति परम्परितं रूपकमलङ्कारः । ‘आक्षेपो भर्त्सनाकृष्टी’ ति मेदिनी ।

( ४१ ) प्रतीति । मदविह्वला मदेन व्याकुला काचित् स्त्री प्रतियोगार्थिनी प्रतियोगं आत्मना क्रियमाणस्य ( प्रश्नद्वारा ) योगस्य संबन्धस्य प्रतिरूपं योगं संबन्धं

---

१ वीरलीलया । २ पीनवल्गु । ३ इदं तु पुष्पं । ४ विह्वला ।

काचित्पुरुषवत्कृत्वा गतिं संस्थानमेव च।
उवाचैनं जितः स्त्रीभिर्जय भो[1] मेदिनीमिति ॥ ४२ ॥
अथ लोलेक्षणा काचिज्जिघ्रन्ती नीलमुत्पलम्।
किंचिन्मदकलैर्वाक्यैर्नृपात्मजमभाषत ॥ ४३ ॥
पश्य भर्तश्चितं चूतं कुसुमैर्मधुगन्धिभिः।
हैमपञ्जर[2]रुद्धो वा कोकिलो यत्र कूजति ॥ ४४ ॥

---

प्रतिवचनमिति यावत् अर्थयते इच्छति तथाभूता सती चूतवल्लरीं आम्रस्य मञ्जरीं गृहीत्वा। 'वल्लरी मञ्जरी तथा।' इति हलायुधः। एतत् कस्य प्रसूनं पुष्पं मञ्जरीत्यर्थः। इति पप्रच्छ। मदविह्वलेति चूतवल्लरीमिति च पदद्वयोपनिबन्धनादश्लीलं किमप्युत्तरमनयाऽभीष्टमिति कवेरभिप्रायो द्रष्टव्यः। एतच्च वङ्गीयहारावलीदर्शनतः स्फुटीभविष्यतीत्यलम्। एतदनङ्गीकारे च मौग्ध्याख्यो नायिकालङ्कारः 'अज्ञानादिव या पृच्छा प्रतीतस्यापि वस्तुनः। वल्लभस्य पुरः प्रोक्तं मौग्ध्यं तत्तत्त्ववेदिभिः।' इत्युक्तेः। व्रीडाव्यञ्जकत्वाच्चार्थस्यात्राश्लीलताख्यो दोषो दुष्परिहर एव।

(४२) काचिदिति। काचित् स्त्री गतिं संस्थानमाकारं एव चेत्यव्ययद्वयं चार्थे। आकारं चेत्यर्थः। 'संस्थानमाकृतौ मृत्यौ' इति मेदिनी। पुरुषवत् कृत्वा 'भोः स्त्रीभिः अस्माभिर्जितः पराभूतः त्वं मेदिनीं जय वशीकुरु' इति एनं बुद्धं उवाच। यः स्त्रीभिरस्माभिः पराभूयसे तस्य ते कैव वसुन्धराविजयप्रत्याशा? तदस्ति चेत्पौरुषं प्रकाश्यतामिदानीमिति भावः।

(४३) अथेति। अथ तस्या एवंवचनानन्तरं काचित् लोलेक्षणा चञ्चलनेत्रा स्त्री नीलं नीलवर्णं उत्पलं कमलं जिघ्रन्ती 'घ्रा गन्धोपादान' इत्यतः शता। उगितश्चेति ङीप्। सती। किंचिन्मदकलैः किंचित् ईषत् यो मदस्तेन कलैः अव्यक्तमधुरैः। वाक्यैः नृपात्मजं राजपुत्रं बुद्धं अभाषत उक्तवती। यौवनगन्धवासितानां श्यामानामुपभोग एव न्याय्य इत्यभिद्योतयितुं नीलोत्पलाघ्राणम्। तत्र च बुद्धस्य प्रवर्तनाय संकेतार्थं नयनयोश्चाञ्चल्यम्।

(४४) तस्या वचनमाह पश्येत्यादिभिर्नवभिः। पश्येति। हे भर्तः स्वामिन्। एतेन न ते युक्तोऽस्मत्त्याग इति व्यज्यते। मधुगन्धिभिः मधुनो मकरन्दस्य गन्धः अस्त्येषु तथाभूतैः। एतेन कुसुमानां परिणतत्वं द्योत्यते। कुसुमैः पुष्पैश्चितं व्याप्तं चूतमाम्रं पश्य। यत्र हैमपञ्जररुद्धो वा हैमे हेम (सुवर्ण) निर्मिते पञ्जरे (पञ्जयते निरुध्यतेऽस्मिन्पक्ष्यादिः) रुद्धो वा नियन्त्रित इव कोकिलः कूजति शब्दं करोति। तिर्यञ्चोऽपि सन्नद्धेनोपभोग्यजातेनाकृष्टा निगडिता इव भूत्वा रमन्ते, त्वं पुनस्ततो विपरीत इति नैतद्युक्तमिति भावः। आपीतानां कुसुममञ्जरीणां हैमशलाकातुल्यत्वेन तन्मध्यगततया च कोकिलस्य हैमपञ्जरबद्धत्वोत्प्रेक्षा। वा शब्दश्चोत्प्रेक्षावाचकः।

---

१ भोः पृथिवी। २ हेम।

**अशोके क्षिप्यतां दृष्टिः कामिशोकविवर्धने ।**
**रुवन्ति भ्रमरा यत्र दह्यमाना इवाग्निना ॥ ४५ ॥**
**चूतयष्ट्या समाश्लिष्टो दृश्यतां तिलकद्रुमः ।**
**शुक्लवासा इव पतिः[1] स्त्रिया पीताङ्गरागया ॥ ४६ ॥**
**फुल्लं कुरवकं[2] पश्य निर्मुक्तालक्तकप्रभम् ।**
**यो नखप्रभया स्त्रीणां निर्भर्त्सित इवानतः ॥ ४७ ॥**

---

( ४५ ) अशोक इति । कामिशोकविवर्धने कामिनां विप्रयुक्तानां कामुकानामित्यर्थः शोकं विवर्धयति तथाभूते । अशोकस्य कामोद्दीपकत्वाद्विप्रयुक्तानां शोकाभिवर्धनम् । अशोके वृक्षविशेषे दृष्टिः क्षिप्यतां त्वयेति शेषः । अशोकमालोकमानानामिदानीं विप्रयुक्तानां शोकोऽभिवर्धते त्वं पुनः सन्निहितास्वप्यस्मासु नादरं प्रदर्शयसि तन्नीरसोसीति भावः । एतदालोकनतोऽपि ते काम उद्दीप्यतामित्याशयः । यत्राशोके अग्निना दह्यमाना इव भ्रमरा रुवन्ति शब्दं कुर्वन्ति । रौतेरादादिकाल्लट् । अशोकपदं चात्र रक्ताशोकपरं, तत एव च तत्र गुञ्जत्सु भ्रमरेषु अग्निना दह्यमानत्वमुत्प्रेक्ष्यते । समयेऽस्मिंस्तिरश्चामपि मनस्युत्कण्ठा प्रादुर्भवति । त्वं तु तद्विपरीतस्ततोऽपि जघन्य इति भावः

( ४६ ) चूतयष्ट्येति । पीताङ्गरागया पीतः पीतवर्णः अङ्गरागः अनुलेपनं यस्यास्तया स्त्रिया शुक्लवासाः शुक्लं वासो वस्त्रं यस्य तथाभूतः पतिरिव चूतयष्ट्या आम्रशाखया समाश्लिष्टः आवेष्टितः तिलकद्रुमः तिलकसंज्ञकस्तरुविशेषः दृश्यतां त्वयेति शेषः । 'चूतयष्टिरिवाभ्याशे' इति कुमारसंभवगतस्य ( ६।२ ) पद्यस्य व्याख्यायां चूतयष्टिश्चूतशाखेति श्रीमान्मल्लीनाथो व्याचख्यौ । स्थावरेष्वपीदानीं कामप्रादुर्भावो नैव पुनस्त्वयीत्यहो ते रसिकत्वमिति भावः । प्रफुल्लयोश्चूततिलकयोः कुसुमप्रायतया कुसुमानां च यथायथं पीतत्वाच्छ्वेतत्वाच्चेयमुपमा, समाश्लिष्ट इति तरुपक्ष उत्प्रेक्षा चेत्यनयोः सङ्करः ।

( ४७ ) ननु भो यद्यपि कामोद्दीपकोऽयं समयस्तथाऽप्यमनोरमत्वाद्युष्माकं न मेऽनुरागप्रादुर्भाव इति चेत्तदपि नास्ति, मनोहारिण्य एव हि वयमित्याह द्वाभ्याम् । फुल्लमिति । फुल्लं विकसितं कुसुमितमित्यर्थः । अनुपसर्गात्फुल्लेत्यादिनिपातनात्साधु । अत एव च निर्मुक्तालक्तकप्रभं निर्मुक्तस्य निष्पीडितस्य अलक्तकस्य लाक्षाद्रवस्येव प्रभा कान्तिर्यस्य तथाभूतम् । आरक्तत्वात्कुसुमानाम् । कुवरकं कुरण्टकं पश्य । यः कुवरकः स्त्रीणां नखप्रभया नखकान्त्या निर्भर्त्सित इव तर्जित इव । ततोऽप्यस्मदीयनखप्रभाणां विशेषत आरक्तत्वादिति भावः । आनतः नम्रीभूतः । लज्जयेति भावः । उत्प्रेक्षालङ्कारः ।

---

1 नरः । 　2 कुरुवकं ।

बालाशोकश्च विनतो[1] वीक्ष्यतामेष पल्लवैः ।
योऽयं[2] हस्तश्रियाऽस्माकं लज्जमान इव स्थितः ॥ ४८ ॥
दीर्घिकां प्रावृतां पश्य तीरजैः सिन्दुवारकैः ।
पाण्डरांशुकसंवीतां शयानां प्रमदामिव ॥ ४९ ॥
दृश्यतां स्त्रीषु माहात्म्यं चक्रवाको ह्यसौ जले ।
पृष्ठतः प्रेष्यवद्भार्यामनुवृत्यानुगच्छति ॥ ५० ॥
मत्तस्य परपुष्टस्य रुवतः श्रूयतां ध्वनिः ।
अपरः कोकिलोऽनुत्को[3] यं प्रतिश्रुत्य कूजति ॥ ५१ ॥

---

( ४८ ) बालाशोक इति । च किंच पल्लवैः भारवद्भिरिति भावः । विनतः नम्रतां प्राप्तः एषः बालाशोकः बालः अशोकतरुः वीक्ष्यतां दृश्यतां त्वयेति शेषः। यः अयं अशोकः अस्माकं हस्तश्रिया हस्तशोभया लज्जमान इव लज्जां प्राप्नुवन्निव स्थितः । सुकुमारतमानामशोकशाखानां तरुणीजनकरसन्निभत्वादियमुक्तिः । एतेन च पद्यद्वयेनात्मनो निरतिशयं सौन्दर्यं दिङ्मात्रेणोदाहृतमनया नार्या । उत्प्रेक्षा ।

( ४९ ) अथ पुनरप्यस्य चेतसि कामरसमुद्दीपयितुमुपवर्णयति दीर्घिकामिति। तीरजैः तीरे तटे जायन्ते तथाभूतैः । 'सप्तम्यां जनेर्डः' इति डः । सिन्दुवारकैः सिन्दुवारा एव सिन्दुवारकाः । स्वार्थे कन् । निर्गुण्डीतरवः । तेषां पुष्पाणि सिन्दुवारकाणि तैः । 'पुष्पमूलेषु बहुलम्' इति विकारप्रत्ययस्य लुप् । प्रावृतां अत्यन्तमावृतां तत एव च पाण्डरांशुकसंवीतां पाण्डरेण शुभ्रेण अंशुकेन वस्त्रेण संवीतां आवृताम् । 'संवीतं रुद्धमावृतम् ।' इत्यमरः । शयानां शयनं कुर्वाणां प्रमदां उत्तमस्त्रियमिव विद्यमानाम् । 'प्रमदः संमदे मत्ते, स्त्रियामुत्तमयोषिति ।' इति मेदिनी । दीर्घिकां वापीं पश्य । दृशेर्लोट् । बिम्बानुबिम्बभावेनोपमालङ्कारः ।

( ५० ) दृश्यतामिति । स्त्रीषु विद्यमानमिति शेषः माहात्म्यं महात्मत्वं प्रभाव इत्यर्थः । दृश्यतां त्वयेति शेषः । कोऽसौ प्रभाव इत्याह चक्रवाक इति । हि यस्मात् जले असौ चक्रवाकः चक्रशब्देनोच्यतेऽसौ पक्षिविशेषः । वच भाषणे इत्यतो घञ् । प्रेष्यवत् प्रेष्यो दास इव अनुवृत्त्या अनुरोधेन ( आनुकूल्येन ) । 'अनुरोधोऽनुवर्तनम् ।' इत्यमरः । भार्यामात्मनः स्त्रियं पृष्ठतः पश्चात् अनुगच्छति । तिर्यक्ष्वपि स्त्रीणां महात्म्यं संदृश्यते किं पुनर्मनुष्येष्विति भावः ।

( ५१ ) मत्तस्येति । मत्तस्य वसन्तवशान्मदं प्राप्तस्य तत एव च रुवतः कूजतः परपुष्टस्य कोकिलस्य । एष हि पक्षोद्भेदतः प्राक्परैः काकैः पोष्यत इति । 'अन्यभृतः परपुष्टः कलकण्ठः कोकिलः पिकः प्रोक्तः ।' इति हलायुधः । ध्वनिः श्रूयतां त्वयेति

---

१ निचितो दृश्यता । २ योऽस्माकं हस्तशोभाभिः । ३ त्कः प्रतिश्रुत्येव ।

अपि नाम विहङ्गेषु[1] वसन्तेनाहितो मदः।
न तु चिन्तयतश्चित्ते[2] जनस्य प्राज्ञमानिनः॥ ५२॥
इत्येवं ता युवतयो मन्मथोद्दामचेष्टिताः[3]।
कुमारं विविधैस्तैस्तैरुपचक्रमिरे नयैः॥ ५३॥
एवमाक्षिप्यमाणोऽपि स तु धैर्याहृते[4]न्द्रियः।
मर्तव्यमिति सोद्वेगो न जहर्ष न सिष्मिये[5]॥ ५४॥

---

शेषः। यं ध्वनिं प्रतिश्रुत्य श्रुत्वा, अनुत्कः पूर्वमनुत्कण्ठितः अपि अपरः कोकिलः कूजति उत्कण्ठां प्राप्तः शब्दायत इत्यर्थः। अहो बत तिरश्चामप्युत्कण्ठाजननानि कोकिलविरुतानि नैव ते मनसि कामरसं जनयन्तीति धिक्त्वामरसिकमिति भावः। प्रतिपूर्वकस्तु शृणोतिः प्रतिज्ञायां प्रसिद्धोऽपि क्वचिद्धात्वर्थानुवर्तितामुपसर्गस्याभ्युपगच्छता श्रवणार्थे प्रयुक्तः। एष पुनरवाचकत्वस्यैव पोषायेति नो बुद्धिः। 'उत्क उन्मना' इत्युत्कण्ठितपर्यायेष्वमरः।

(५२) अपीति। वसन्तेन कर्त्रा विहङ्गेषु विहायसि आकाशे गच्छन्ति विहङ्गास्तेषु पक्षिषु। विहायसपूर्वाद्गमेः खचि 'विहायसो विह इति वाच्यम्, खच्च डिद्वा वाच्य' इति विहादेशो गमेष्टिलोपश्च। अपि रसानभिज्ञेष्वपीति भावः। मदः मदनविकारविशेषः आहितः जनितः नामेति प्राकाश्ये। स्फुटमेवेदमिति भावः। तु किन्तु चिन्तयतः विचारमेव कुर्वतः प्राज्ञमानिनः आत्मानं प्राज्ञं (ज्ञानिनं) मन्यमानस्य जनस्य, भवत इति भावः। चित्ते न मदो नाहितः। 'ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयती' ति भावः। विहङ्गापेक्षयापि निकृष्टोऽसीत्याशयः।

(५३) उपसंहरति। इतीति। मन्मथोद्दामचेष्टिताः मन्मथेन मदनेन उद्दामानि निरर्गलानि चेष्टितानि व्यापारा यासां तथाभूताः ता युवतयस्तरुण्यः स्त्रियः कर्त्र्यः तैस्तैः विविधैरनेकप्रकारैः नयैः उपायैरिति यावत्। इत्येवं उक्तप्रकारेण कुमारं राजपुत्रं उपचक्रमिरे वशीकरणोपायारम्भस्य विषयीकृतवत्य इत्यर्थः। 'ज्ञात्वाऽऽरम्भे च विक्रमे' इत्युपक्रमशब्दार्थेषु मेदिनी। अयमत्रोपाय इति ज्ञात्वा स्वाभीष्टे वस्तुन्युपायारम्भ उपक्रमः। तद्विषयीकरणार्थकत्वाच्चोपक्रमेः सकर्मकता।

(५४) एवमिति। एवमनेन प्रकारेण आक्षिप्यमाणः समाकृष्यमाणोऽपि-वशीक्रियमाणोपीत्यर्थः धैर्याहृतेन्द्रियः धैर्येण 'व्यवसायादलचनं धैर्यं विघ्ने महत्यपि' इत्युक्तलक्षणेन आहृतानि स्वायत्तीकृतानीत्यर्थः इन्द्रियाणि यस्य तथाभूतः स बुद्धः। तुकारोऽत्र पादपूर्त्यर्थः। मर्तव्यं आत्मना मरणं प्राप्तव्यं इति हेतोः सोद्वेगः उद्वेगेन खेदेन सह वर्तमानः सन् न जहर्ष न हर्षं प्राप्तवान् तत एव च न सिष्मिये ईषदपि न हसितवान्। ष्मिङ् ईषद्धास इत्यतो लिट्। ङित्त्वादात्मने पदम्।

---

१ विहंगानां। २ चित्तं। ३ चेतसः। ४ धैर्यावृते। ५ सिस्मिये।

तासां तत्त्वे[1]ऽनवस्थानं दृष्ट्वा स पुरुषोत्तमः ।
सुसंविग्नेन[2] धीरेण चिन्तयामास चेतसा ॥ ५५ ॥
किं न्विमा[3] नावगच्छन्ति चपलं यौवनं स्त्रियः।
यतो रूपेण संपन्नं जरेदं[4] नाशयिष्यति ॥ ५६ ॥
नूनमेता न पश्यन्ति कस्यचिद्रोगसंप्लवम्।
ततो[5] हृष्टा भयं त्यक्त्वा जगति व्याधिधर्मिणि ॥ ५७ ॥
अनभिज्ञाश्च सुव्यक्तं मृत्योः सर्वापहारिणः।
ततः स्वस्था निरुद्वेगाः क्रीडन्ति च हसन्ति च ॥ ५८ ॥

( ५५ ) किं तर्हि चकारेत्याह तासामिति । सः पुरुषोत्तमः पुरुषश्रेष्ठो बुद्धः तासां स्त्रीणां तत्त्वे परमार्थभूते 'हरति निमेषात्कालः सर्वम्' इत्येवंरूपे वस्तुनि अनवस्थानं अवस्थानस्याभावं अप्रवेशमिति यावत् दृष्ट्वा ज्ञात्वेत्यर्थः । 'सर्वे दृश्यर्था ज्ञानार्थाः' इत्युक्तेः । सुसंविग्नेन सुतरां संविग्नेन विषादं प्राप्तेन । धीरेण धैर्ययुक्तेन चेतसा मनसा करणभूतेन चिन्तयामास विचारितवान् ।

( ५६ ) विचारमाह किंन्विमा इति । इमाः स्त्रियः कर्त्र्यः यौवनं तारुण्यं चपलं अस्थिरं इति नावगच्छन्ति न जानन्ति किन्नु । किन्नु इति वितर्के । 'चटुलं चपलं लोलं चलं पारिप्लवास्थिरे ।' इति हैमः । कुतस्तावद्यौवनस्यास्थिरतेत्याह यत इति । यतः यस्मात् रूपेण सौन्दर्येण संपन्नं युक्तं इदं यौवनं कर्मभूतं जरा वृद्धता कर्त्री नाशयिष्यति नाशं गमयिष्यति । तस्मादिदं यौवनं चपलमिति भावः ।

( ५७ ) नूनमिति । एताः स्त्रियः कस्यचित्कस्यापि मनुष्यस्य रोगसंप्लवं रोगसम्बन्धं नूनं निश्चितं न पश्यन्ति । ततः तस्मादेव कारणात् व्याधिधर्मिणि व्याधयो रोगा एव धर्माः ते सन्त्येषु तथाभूते । जगति लोके भयं रोगादिविषयिणीं भीतिं त्यक्त्वा हृष्टा आनन्दिताः सन्तीति शेषः । यतो व्याधिसमाक्रान्तेऽपि जगति निर्भीका एताः प्रहृष्यन्ति ततो निश्चीयते नैताः कोऽपि व्याधिभिः संसृज्यत इति जानन्तीति भावः ।

( ५८ ) अनभिज्ञा इति । एता इति पूर्वस्मात्संबध्यते । एताः स्त्रियः सर्वापहारिणः सर्वानपि प्राणिनः अपहर्तुं शीलं यस्य तथाभूतस्य मृत्योर्विषये अनभिज्ञाः ज्ञानशून्याः । मृत्योरिति शेषे षष्ठी । मृत्योर्ज्ञानमप्येतासां नास्तीति भावः । इत्येतत् सुव्यक्तं सुतरां स्पष्टम् । कुत एवमनुमीयत इत्याह । तत इति । ततः मरणज्ञानशून्यत्वादेव हेतोः स्वस्थाः स्वस्थत्वयुक्ताः निरुद्वेगाः निर्गत उद्वेगो विषादो याभ्यस्तथाभूताश्च सत्यः क्रीडन्ति च हसन्ति च । को हि मरणं जानान इत्थं चेष्टेतेति भावः ।

१ तत्त्वेन वस्थानं । २ ससंविग्नेन । ३ विना । ४ जरेयं । ५ तथा ।

जरां [1]व्याधिं च मृत्युं च कोहि जानन् सचेतनः।
स्वस्थस्तिष्ठे[2]न्निषीदेद्वा [3]स्वप्याद्वा किं पुनर्हसेत्? ॥ ५९ ॥
यस्तु दृष्ट्वा परं जीर्णं व्याधितं मृतमेव च।
स्वस्थो भवति नोद्विग्नो यथाऽचेतास्तथैव सः ॥ ६० ॥
वियुज्यमानेऽपि तरौ पुष्पैरपि फलैरपि।
पतति च्छिद्यमाने वा तरुरन्यो न शोचति ॥ ६१ ॥
इति ध्यानपरं दृष्ट्वा विषयेभ्यो गतस्पृहम्।
उदायी नीतिशास्त्रज्ञस्तमुवाच सुहृत्तया ॥ ६२ ॥

(५९) एददेव विस्पष्टयति। को हीति। हि यस्मात् जरां वृद्धतां व्याधिं रोगं च मृत्युं मरणं च जानन् प्राणिनामवश्यंभावीति विभावयन् कः सचेतनः चेतनावान्पुरुषः कर्ता स्वस्थः निश्चिन्तः तिष्ठेत्? वा अथवा निषीदेत् उपविशेत्? वा अथवा स्वप्यात् निद्रामनुभवेत्? न कोऽपीत्यर्थः। किंपुनर्हसेत्? कुतः पुनर्हसेदित्यर्थः। हासश्चात्र विलासोपलक्षकः। स्वास्थ्येनावस्थातुं निषत्तुं निद्रातुमपि वा न प्रभवेत्कुतः पुनर्विलासाननुभवितुमिति भावः। यश्च सत्यप्येवं विलासाननुभवेत्स न चेतनावानित्याशयः।

(६०) एतदेव विस्पष्टमाह य इति। तु किन्तु यः परं आत्मभिन्नं नरं जीर्णं जरां प्राप्तं व्याधितं संजातव्याधिम्। तारकादित्वादितच्। मृतं प्राप्तमरणमेव च दृष्ट्वा स्वस्थः स्वास्थ्ययुक्तः भवति उद्विग्नो विषण्णः एतत्सजातीयोऽहमप्येनां दशां गमिष्यामीति विभाव्य खिन्नः न भवति स पुरुषः यथा अचेताः अचेतनः पदार्थस्तथैव तादृश एव। चेतनकार्यस्य विवेकस्याभावादिति भावः। 'जीर्णो जीनो जरन्नपि' इति वृद्धपर्यायेष्वमरः।

(६१) अचेतनत्वमेव प्रकारान्तरेणोपपादयति वियुज्यमान इति। तरौ आत्मभिन्ने वृक्षे पुष्पैः अपि फलैः अपि वियुज्यमाने शून्यतां प्राप्नुवति सति पतति पतनं प्राप्नुवति सति छिद्यमाने छेदकैः शकलीक्रियमाणे वा अन्यः तत्सजातीयस्तद्भिन्नस्तरुः न शोचति न शोकमावहति। स्वसजातीयेनानुभूयमानाया विपद आत्मनि संपातमविभावयतस्तत एव च स्वस्थस्य पुरुषस्यास्य तरोश्च न कश्चिद्विशेष इत्यचेतन एवायमिति भावः।

(६२) इतीति। तं बुद्धं इति एवं प्रकारेण ध्यानपरं चिन्तनैकनिष्ठं विषयेभ्यः इन्द्रियोपभोग्येभ्यः पदार्थेभ्यः। पञ्चम्याः समासगतेन गतपदेन संबन्धः। गतस्पृहं गता निवृत्ता स्पृहा इच्छा यस्य तथाभूतं विषयवाञ्छाशून्यमित्यर्थः। दृष्ट्वा नीतिशास्त्रज्ञः नीतिशास्त्रवेत्ता उदायी एतत्संज्ञः पुरोहितपुत्रः कर्ता सुहृत्तया मित्रत्वेन उवाच उक्तवान्।

१ मृत्युं च व्याधिं च। २ तिष्ठन्। ३ शुपेद्वा।

अहं नृपतिना दत्तः सखा तुभ्यं क्षमः किल।
तस्मात्त्वयि विवक्षा मे[1] तथा प्रणयवत्तया ॥ ६३ ॥

अहितात्प्रतिषेधश्च हिते चानुप्रवर्तनम्।
व्यसने चापरित्यागस्त्रिविधं मित्रलक्षणम् ॥ ६४ ॥

सोऽहं मैत्रीं प्रतिज्ञाय पुरुषार्थात्पराङ्मुखम्।
यदि त्वां समुपेक्षेयं[2] न भवेन्मित्रता मयि ॥ ६५ ॥

तद्ब्रवीमि सुहृद्भूत्वा तरुणस्य वपुष्मतः।
इदं न प्रतिरूपं ते स्त्रीष्वदाक्षिण्यमीदृशम् ॥ ६६ ॥

---

(६३) विवक्षन्नुदायी प्रथमतस्तावदात्मनो वचनेऽधिकारमाह। अनधिकारिणा ह्युक्तमनादरणीयं भवतीति। **अहमिति**। नृपतिना राज्ञा। पतिः समास एवेति घिसंज्ञायामाङो ना स्त्रियामिति ना। तुभ्यं अहं क्षमः उपदेशादौ समर्थः, योग्यो हितो वा सखा दत्तः किल। 'योग्ये शक्ते हिते क्षमम्।' इति धरणिः। तस्मात् यतो नृपतिनाऽहं दत्तस्तस्मात्कारणात् तथा प्रणयवत्तया प्रणयः प्रेम अस्त्यस्मिंस्तस्य भावः तस्मात् स्वभावसिद्धादनुरागादित्यर्थः। त्वयि त्वद्विषये मे विवक्षा वक्तुमिच्छा अस्तीति शेषः। नाहं विनैव संबन्धं ब्रवीमि तदवधार्यतां मे वचनमिति भावः।

(६४) ननु भोः सखा त्वं तन्ममानुगतेनैव भवता भवितव्यमिति चेन्नायं सखिधर्मः। स ह्येतद्विपरीत एवेत्याह। **अहितादिति** अहितात् अनिष्टात् प्रतिषेधः निवारणं, च किंच हिते हितकारिणि वस्तुनि विषये प्रवर्तनं प्रवृत्तिजननं, च किंच व्यसने दुःखे सति अपरित्यागः अत्यजनं इति एतत् त्रिविधं त्रिप्रकारं मित्रलक्षणं मित्रस्य ज्ञापकम्। मित्रत्वबोधकमित्यर्थः। यत्रैतत् त्रितयं स एव मित्रत्वेन ज्ञातव्य इति भावः। अतो मित्रधर्मत्वादेवेयं मम वचने प्रवृत्तिरित्यभिप्रायः।

(६५) सोऽहमिति। सः यस्ते राज्ञा समर्पितः सखा सः अहं मैत्रीं मित्रतां 'गुणवचनब्राह्मणादिभ्य' इति भावे ष्यञि स्त्रीत्वविवक्षायां 'षिद्गौरादिभ्यश्चे'ति ङीषि हलस्तद्धितस्येति यलोपे च साधु। प्रतिज्ञाय अङ्गीकृत्य पुरुषार्थात् कामरूपात्तृतीयस्मात्पुरुषार्थात्। पुरुषैरर्थ्यमानत्वाच्चास्य पुरुषार्थता। पुरुषार्थपदेनावश्यमासेवनीयत्वं द्योत्यते। पराङ्मुखं विमुखं त्वां यदि समुपेक्षेय उपेक्षाविषयं कुर्याम्। समुपपूर्वादीक्षतेर्लिङ्। तदेति यदर्थबलाल्लभ्यते। तदा मयि मित्रता मित्रत्वं न स्यात्। एतदेव हि मित्रत्वं यदनुचिते पथि कृतपदः सखा विनिवार्यते। तत एव च न त्वामेवंचारिणमुपेक्षितुं शक्नोमीति भावः।

(६६) तदिति। तत् तस्मात्कारणात् सुहृत् मित्रं भूत्वा मैत्रीमालम्ब्येत्यर्थः। ब्रवीमि। वचनमाह तरुणस्येति। तरुणस्य कामोपभोगार्हे वयसि स्थितस्येति भावः।

---

१ तया। २ समुपक्षेयं, समुपेक्ष्येयं।

अनृतेनापि नारीणां युक्तं समनुवर्तनम्।
तद्व्रीडापरिहारार्थमात्मरत्यर्थमेव च ॥ ६७ ॥
संनतिश्चानुवृत्तिश्च स्त्रीणां हृदयबन्धनम्।
स्नेहस्य हि गुणा योनिर्मानकामाश्च योषितः ॥ ६८ ॥
तदर्हसि विशालाक्ष हृदयेऽपि पराङ्मुखे।
रूपस्यास्यानुरूपेण दाक्षिण्येनानुवर्तितुम् ॥ ६९ ॥

---

तत्रापि च वपुष्मतः प्रशस्तं वपुरस्त्यस्य तथाभूतस्य। प्राशस्त्यार्थे मतुप्। सुन्दरशरीरशालिन इत्यर्थः। ते तव स्त्रीषु विषये ईदृशं एवंप्रकारं इदं मया साक्षात्क्रियमाणं अदाक्षिण्यं अननुकूलत्वं न प्रतिरूपं न युक्तम्। 'दाक्षिण्यं त्वनुकूलता' इति हैमः। 'आत्मनः प्रतिरूपोऽसौ' इत्यादिषु भारतादिवचनेषु प्रतिरूपशब्दस्य योग्यार्थकत्वं दृष्टम्।

(६७) अनृतेनेति। अनृतेन अपारमार्थिकतया कपटेन, प्रेमाभासेनेत्यर्थः। करणभूतेन। नारीणां स्त्रीणाम्। 'कर्तृकर्मणोः कृती'ति कर्मणि षष्ठी। समनुवर्तनं अनुरोधः। अनुकूलतासंपादनमित्यर्थः। 'अनुरोधोऽनुवर्तनम्' इत्यमरः। तद्व्रीडापरिहारार्थं तासां व्रीडाया लज्जायाः परिहारार्थं दूरीकरणार्थं आत्मरत्यर्थं आत्मनो रतये प्रीतय इत्यात्मरत्यर्थं च युक्तं कर्तुं योग्यम्। लज्जा हि यद्यपि नैसर्गिकं नारीणामलङ्करणं तथापि नासौ प्रमाणमतिक्रान्ता। तया हि समाक्रान्ता नात्मनः किमप्यभीष्टं सम्पादयितुं ताः प्रभवन्तीति। तत एव चावश्यकस्तत्परिहारः। एकान्ततश्च प्रणयिनो जनान्नैतास्त्रपन्त इत्यनृतमपि प्रेम प्रकाश्यानुकूलनीया इति भावः। पद्यमेतद्विस्पष्टयत्युदायिनो हृदयस्यापकृष्टत्वम्।

(६८) सन्नतिरिति। संनतिः सम्यङ्नमस्करणं अनुवृत्तिः अनुकूलतया वर्तनं चेत्येतत् स्त्रीणां हृदयबन्धनं हृदयस्य बन्धनं बन्धनवदायत्तीकरणोपाय इत्यर्थः। ननु भो गुणवानहं तदवश्यं मयि प्रीतिं वितनुयुनार्यः स्नेहो हि गुणमात्रसापेक्ष इति चेत्तत्राह। स्नेहस्येति। गुणाः धैर्यशौर्यादयः स्नेहस्य प्रेम्णः योनिः उत्पत्तिस्थानं, प्रेमजनका इत्यर्थः। हि निश्चयेन। अर्थोऽयं सुनिश्चित इत्यर्थः। चकारस्त्वर्थः। च किन्तु योषितः स्त्रियः मानकामाः माने आदरे कामं इच्छा यासां तथाभूताः भवन्तीति शेषः। अतश्च गुणिनमप्यात्मनोऽवमन्तारं नैताः स्पृहयन्तीति प्रयुज्यतामेतास्वादर इति भावः। 'सतां माने म्लाने मरणमथवा दूरगमनम्।' इत्यादिषु महानाटकादिवचनेषु प्रयुक्त आदरार्थको मानशब्दः कविभिः। मानश्च सन्नत्या चानुवृत्त्या चावश्यं सम्पद्यत इत्यवश्यमेतदनुष्ठेयमिति भावः।

(६९) तदिति। तत् तस्मात् हे विशालाक्ष विशाले दीर्घे अक्षिणी नेत्रे यस्य तथाभूत सुन्दरेत्यर्थः। 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षच्। हृदये मनसि पराङ्मुखे वैमुख्यं प्राप्ते सत्यपि। अस्य त्वयि प्रत्यक्षायमाणस्य रूपस्य अनुरूपेण

दाक्षिण्यमौषधं स्त्रीणां दाक्षिण्यं भूषणं परम् ।
दाक्षिण्यरहितं रूपं निष्पुष्पमिव काननम् ॥ ७० ॥
किंवा दाक्षिण्यमात्रेण भावेनास्तु परिग्रहः ।
विषयान्दुर्लभाँल्लब्ध्वा न ह्यवज्ञातुमर्हसि ॥ ७१ ॥
कामं पर[1] इति ज्ञात्वा देवोऽपि हि पुरन्दरः ।
गौतमस्य मुनेः पत्नीमहल्यां चकमे पुरा ॥ ७२ ॥

योग्येन दाक्षिण्येन आनुकूल्येन । 'दाक्षिण्यं त्वनुकूलता' इति हैमः । अनुवर्तितुं वर्तितुमिति यावत् अर्हसि योग्यो भवसि । आनुकूल्येन वर्तस्व । अदाक्षिण्येन पुनर्वर्तनमननुरूपमस्यास्तवाकृतेरिति भावः ।

( ७० ) किंवा फलं दक्षिण्येनेति चेत्तत्राह । दाक्षिण्यमिति । दाक्षिण्यमानुकूल्यं स्त्रीणां औषधं विकारप्रशमनोपाय इत्यर्थः । तथापि न ह्येतत्केवलं तासामेव कृते समाश्रयणीयमित्याह । दाक्षिण्यमिति । दाक्षिण्यं परं श्रेष्ठं भूषणमलङ्करणं पुरुषाणामित्यर्थात् । ननु भो यद्यलङ्करणमेव दाक्षिण्यं तदा सति लोकातिशायिनि सौन्दर्ये किं तेन ? इति चेत्तत्राह । दाक्षिण्येति । दाक्षिण्यरहितं दाक्षिण्येन शून्यं यत् रूपं तत् निष्पुपं पुष्परहितं काननं अरण्यम् इव । यथा रमणीयमपि काननं न हि पुष्पैर्विनाकृतं मनोहरत्वमापद्यते एवं दाक्षिण्यरहितं रूपमिति भावः । 'अत्र च प्रथामि काव्यशशिन' मित्यादिवदनुचितत्वमुपमाया इति द्रष्टव्यम् ।

( ७१ ) ननु तर्हि यथाकथमपि स्वीकरिष्यामि दाक्षिण्यमिति चेन्न हि तावतैव कृतार्थत्वमित्याह । किं वेति । वा अथवा दाक्षिण्यमात्रेण केवलेन दाक्षिण्येन किं ? किं फलं न किंचिदपि फलमित्यर्थः । प्रेमशून्यं हि दाक्षिण्यं नाभीष्टं संपादयतीति 'उचितः प्रणयो वरं विहन्तुं बहवः खण्डनहेतवो हि दृष्टाः । उपचारविधिर्मनस्विनीनां न तु पूर्वाभ्यधिकोऽपि भावशून्यः ।' इति मालविकायां कालिदासः । ततः किमित्यत आह । भावेनेति । भावेन प्रेम्णैव करणभूतेन परिग्रहः स्त्रीणां स्वीकारः अस्तु भवतु । प्रार्थनायां लोट् । प्रणयपूर्वमेवैताः परिगृह्यन्तामिति भावः। ननु भोः किमेतासां परिग्रहेणेति चेत्तत्रोपदिशति । विषयानिति । दुर्लभान् दुःखेन लब्धुं शक्यान् विषयानुपभोग्यान्पदार्थान् स्त्रीप्रभृतीन् लब्ध्वा प्राप्य अवज्ञातुं अवमानयितुं तानित्यर्थात् न अर्हसि न योग्यो भवसि । आदित एव तावदशक्य एवंविधानां विषयाणां लाभः । दैवयोगात्तु संघटिते तस्मिन्नवमानप्रकाशनमत्यन्तमयुक्तमिति नैवाचरणीयमिति भावः ।

( ७२ ) ननु भो जघन्यजनमात्रोचितः कामोपभोगः शिष्टानां तत्रादरादर्शनादिति चेन्नैतदेवं शिष्टप्रवरैरपि हि परत्वेनैवाभिमतः काम इत्युदाहरणप्रदर्शनत उपपादयति काममित्यादिभिर्दशभिः पद्यैः । काममिति देवः अपि । एतेन पुरन्दरस्य

१ परमिति ।

अगस्त्यः प्रार्थयामास सोमभार्यां च रोहिणीम्।
तस्मात्तत्सदृशीं[1] लेभे लोपामुद्रामिति श्रुतिः ॥ ७३ ॥
उतथ्यस्य[2] च भार्यायां ममतायां[3] महातपाः।
मारुत्यां जनयामास भरद्वाजं बृहस्पतिः ॥ ७४ ॥

---

शिष्टत्वातिशयो व्यज्यते। पुरन्दरः पुरः शत्रूणां नगराणि दारयति तथाभूत इन्द्रः कर्ता। 'पूःसर्वयोर्दारिसहो'रिति खच्। कामं तृतीयं पुरुषार्थं पर इति श्रेष्ठ इति ज्ञात्वा। 'निपातेनाभिहिते द्वितीयान्यतरस्याम्।' इत्युक्तेः परशब्दात्प्रथमा। प्रयुञ्जते चैवं कवयः। यथा माघः 'क्रमादमुं नारद इत्यबोधि सः।' इति। पुरा पूर्वस्मिन्काले मुनेः। एतेनैतद्भार्याभिमर्शनस्यायुक्तत्वं व्यज्यते। गोतमस्य पत्नीं भार्याम्। एतेनास्या अपरैरस्पृहणीयत्वं द्योत्यते। 'अनिर्वर्णनीयं परकलत्र'मिति। अहल्यां एतन्नाम्नीं चकमे कामयामास। कमु कान्तावित्यतो लिट्। 'आयादय आर्धधातुके वा'इति विकल्पाण्णिङोऽभावे रूपम्। कान्तिरिच्छा। 'स्पर्शविशेषविषयात्त्वस्याभिमानिकसुखानुविद्धा फलवत्यर्थप्रतीतिः प्राधान्यात्कामः।' इति वात्स्यायनः। शक्रादेरहल्यादूषणादिकमशेषमप्येतान्निरस्तं तन्त्रवार्तिके शिष्टाचारप्रामाण्यं व्यवस्थापयद्भिर्भट्टैः। विस्तरभयात्पुनर्नात्रोदाहर्तुं शक्यत इति।

(७३) अगस्त्य इति। अगस्त्यो नाम मुनिः कर्ता सोमभार्यां चन्द्रपत्नीं रोहिणीं एतन्नामिकां प्रार्थयामास याचितवान्। च किंच तस्मात् सोमात् तत्सदृशीं तस्या रोहिण्याः सदृशीं तुल्यां लोपामुद्रां नाम स्त्रियं लेभे प्राप्तवान्। मुनेरप्यगस्त्यस्य कामवशात्परभार्याप्रार्थने प्रवृत्तिः कामस्य प्राधान्यमभिव्यञ्जयतीति भावः।

(७४) उतथ्यस्येति। च किंच महातपाः महत्तपो यस्य तथाभूतः। एतेनैतत्कृतस्याचारस्याविगर्हणीयत्वं द्योत्यते। बृहस्पतिः देवानां गुरुः कर्ता। उतथ्यस्य नामात्मनो भ्रातुः भार्यायां मारुत्यां मरुतां देवानां पुत्र्यां ममतायां एतन्नामिकायां भरद्वाजं एतन्नामकं पुत्रं जनयामास उत्पादितवान्। 'त्रयस्त्वङ्गिरसः पुत्रा लोके सर्वत्र विश्रुताः। बृहस्पतिरुतथ्यश्च संवर्तश्च धृतव्रतः।' इति महाभारतम्। 'ततोऽस्य (राज्ञो भरतस्य) पुत्रजन्मनि वितथे (निष्फले) पुत्रार्थिनो दीर्घतमसा **पार्ष्ण्यपास्त**बृहस्पतिवीर्यादुतथ्यपत्नीममतासमुत्पन्नो भरद्वाजाख्यो नाम पुत्रो मरुद्भिर्दत्तः।' इति विष्णुपुराणम् (४।१९।५) अस्य च नाम्नो निरुक्तिस्तत्रैवोक्ता यथा—'मूढे भर द्वाज (द्वाभ्यामावाभ्यां जातं) मिमं भरद्वाजं बृहस्पते। यातौ यदुक्त्वा पितरौ भरद्वाजस्ततस्त्वयम्।' इति। ममताबृहस्पत्योरियमन्योन्यं प्रत्युक्तिः पूर्वार्धं गता।

---

१ सदृशं। २ औतथ्यस्य, औतरथ्यस्य।३ समतायां।

बृहस्पतेर्महिष्यां च जुह्वत्यां जुह्वतां वरः।
बुधं विबुधधर्माणं जनयामास चन्द्रमाः ॥ ७५ ॥
कालीं चैव पुरा कन्यां जलप्रभवसंभवाम्।
जगाम यमुनातीरे जातरागः पराशरः ॥ ७६ ॥
मातङ्ग्यामक्षमालायां गर्हितायां रिरंसया।
कपिञ्जलादं[1] तनयं वशिष्ठोऽजनयन्मुनिः ॥ ७७ ॥

(७५) बृहस्पतेरिति। च किंच जुह्वतां होमकर्तॄणां मध्ये वरः श्रेष्ठः। धार्मिकश्रेष्ठ इति भावः। एतेनैतदीयाचारस्य प्रामाण्यं द्योत्यते। चन्द्रमाः चन्द्रः कर्ता जुह्वत्यां हवनकर्त्र्यां यज्ञकर्मणि पत्युः सहकृत्वर्यामित्यर्थः। बृहस्पतेः महिष्यां तारायां नाम भार्यायाम्। महिषीपदं च भार्यार्थे प्रयुज्यतेऽश्वघोषेण। विबुधधर्माणं विबुधस्य पण्डितस्य धर्मा यस्मिंस्तथाभूतम्। 'धर्मादनिच् केवलात्।' इत्यनिच्। बुधं एतन्नामानं पुत्रं जनयामास। पुरा किल चन्द्रमा मदातिशयवशात्गुराचार्यस्य बृहस्पतेस्तारां नाम भार्यामपजहार। तस्यां च बुधं जनयामास। बुधश्चात्मनः पितरमनाचक्षाणां मातरं शप्तुमुद्यतश्चन्द्रमसा 'साधु साधु वत्स प्राज्ञोऽसी' त्यभिधाय बुध इति नाम्ना ख्यापित' इति विष्णुपुराणे (४।६) द्रष्टव्यम्। विशेषतश्च वृत्तमेतत्पद्मपुराण उत्तरखण्डे २११ अध्याये दृश्यम्।

(७६) कालीमिति। चैवेत्यव्ययद्वयं समुच्चये किंचेत्यर्थः। पुरा पूर्वस्मिन्काले यमुनातीरे यमुनानद्यास्तटे पराशरः एतन्नामा मुनिः जातरागः जात उत्पन्नो रागोऽनुरागो यस्मिंस्तथाभूतः सन् कन्यां असंजातविवाहां जलप्रभवसंभवां जले प्रभवो यस्य स जलप्रभवो मत्स्यः तस्मात्संभव उत्पत्तिर्यस्यास्तथाभूताम्। मत्स्यतो जातामित्यर्थः। कालीं योजनगन्धां नाम व्यासमातरं (सत्यवतीम्) जगाम उपभुक्तवान्। 'ऋतौ भार्यां गच्छेत्' इत्यादिषु किल वचनेषु गच्छतिरुपभोगार्थो द्रष्टव्यः। स्मृतिप्रणेत्रा पराशरेणाप्यनुशीलितोऽयं मयोपदिश्यमानः पन्था इति भावः। 'काली योजनगन्धा च गन्धकाली झषोदरी। व्यासमाता सत्यवती' इति शब्दरत्नावली। एषा च मत्स्योदरे धीवरैर्लब्धा। एतत्कथा देवीभागवते द्वितीयस्कन्धे द्वितीयाध्याये द्रष्टव्या।

(७७) मातङ्ग्यामिति। मुनिः वसिष्ठः एतन्नामा कर्ता रिरंसया रन्तुमिच्छया विशिष्टः सन्। वैशिष्ट्ये तृतीया। रमेः सन्नन्तादप्रत्ययादित्यप्रत्यये टाप्। मातङ्ग्यां मातङ्गजातिभवायाम्। 'जातेरस्त्रीविषयादयोपधात्।' इति ङीष्। 'मातङ्गः श्वपचे गजे।' इति मेदिनी। अक्षमालायां अरुन्धत्याम्। 'अक्षमाला त्वरुन्धती।' इति हैमः। कपिञ्जलादं एतन्नामकं तनयं पुत्रं अजनयत् उत्पादितवान्।

१ कपिञ्जलाख्यं।

**ययातिश्चापि राजर्षिर्वयस्यपि विनिर्गते ।**
**विश्वाच्याऽप्सरसा सार्धं रेमे चैत्ररथे वने ॥ ७८ ॥**
**स्त्रीसंसर्गं विनाशान्तं पाण्डुर्ज्ञात्वापि कौरवः ।**
**माद्रीरूप[1]गुणाकृष्टः सिषेवे कामजं सुखम् ॥ ७९ ॥**
**करालजनकश्चैव हृत्वा ब्राह्मणकन्यकाम् ।**
**अवाप भ्रंशम[2]प्येवं न तु तत्याज मन्मथम् ॥ ८० ॥**
**एवमाद्या महात्मानो विषयान् गर्हितानपि ।**
**रतिहेतोर्बुभुजिरे प्रागेव गुणसंहितान् ॥ ८१ ॥**

---

'अक्षमाला वसिष्ठेन संयुक्ताधमयोनिजा । शारङ्गी मन्दपालेन जगामाभ्यर्हणीयताम् ॥' इति मनुः ९।२३.

(७८) ययातिरिति । राजर्षिः राजा चासौ ऋषिश्च ऋषिगुणविशिष्टो राजेत्यर्थः । ययातिः एतत्संज्ञः क्षत्रियः कर्ता वयसि तारुण्ये । वयः शब्दस्य जीवितकालावस्थासामान्यवाचकत्वेऽप्यत्र तारुण्यवाचकता । अन्यथा विनिर्गमनानुपपत्तेः । विनिर्गते अपक्रान्ते सत्यपि । वार्धके प्राप्तेऽपीत्यर्थः। विश्वाच्या विश्वाचीसंज्ञया अप्सरसा स्वर्वेश्यया सार्धं सह । 'सार्धं तु साकं सत्रा समं सह ।' इत्यमरः। चैत्ररथे एतत्संज्ञके दिव्ये वने रेमे रतवान् । 'पुरा किल ययातिर्नाम चन्द्रवंशजो भूपालः शुक्रशापादकाल एव जरयाऽभिभूतः कनीयसः पुत्रात् पुरोस्तारुण्यं समवाप्य विश्वाच्या नामाप्सरसा रेमे।' इति पौराणिकाः। विष्णुपुराणे ४।१०

(७९) स्त्रीसंसर्गमिति । कौरवः कुरुकुलोद्भवः पाण्डुः स्त्रीसंसर्गं स्त्रियो भार्यायाः संसर्गं समागमं विनाशान्तं विनाशो मृत्युः अन्ते यस्य तथाभूतं ज्ञात्वाऽपि माद्रीरूपगुणाकृष्टः माद्या रूपेण सौन्दर्येणेत्यर्थः गुणैश्च आकृष्टः गृहीतहृदयः सन् कामजं कामोपभोगोत्पन्नं सुखं सिषेवे सेवितवान् । पुरा किल भूपतिः पाण्डुर्मृगयामटन् हरिणरूपमास्थाय भार्यया समं विहरन्तं किन्दमं नाम मुनिमजानानो विव्याध । सोऽपि विक्षतगात्रः शापमस्मै प्रायच्छत् स्त्रियं संसेवमानस्त्वं कालमुखं प्रवेक्ष्यसीति । एतच्च समवगच्छन्नपि पाण्डुः कदाचन समुपस्थिते वसन्ते कनीयस्यां जायायां माद्यां प्रणयं प्रयुञ्जानो मृत्युना जगृहे इति भारतीया कथाऽत्रानुसंधेया ।

(८०) करालेति । चैवेत्यव्ययद्वयं किं चेत्यर्थे । किंच करालजनकः एतन्नामा भूपः ब्राह्मणकन्यकां ब्राह्मणस्य कन्यां हृत्वा भ्रंशं उन्नतेः परिभ्रंशं, पातित्यं हीनां दशां वा अवाप प्राप्तवान् एवं सत्यपि मन्मथं मदनं तत्सम्बन्धिनं व्यापारमित्यर्थः । न तु तत्याज नैव त्यक्तवान् । कामपरायण आत्मनो भ्रंशमपि नैव गणयामासेत्यर्थः ।

(८१) वचनमुपसंहरति द्वाभ्याम् । एवमिति । एवमाद्या एवं उक्तप्रकाराः पुरुषा आद्या आदयो येषु ते महात्मानः महान् पूज्य आत्मा येषां ते पुरुषाः गर्हि-

---

[1] क्षिप्तः । [2] प्येव ।

त्वं पुनर्न्यायतः प्राप्तान्[1]रूपवान्बलवान्युवा ।
विषयानवजानासि यत्र सक्तमिदं जगत् ॥ ८२ ॥
इति श्रुत्वा वचस्तस्य [2]कुमारः प्रत्यभाषत ।
मेघस्तनितनिर्घोषः श्लक्ष्णमागमसंहितम् ॥ ८३ ॥
उपपन्नमिदं वाक्यं सौहार्दव्यञ्जकं त्वयि ।
अत्र च त्वाऽनुनेष्यामि [3]यतो मा दुष्टु मन्यसे ॥ ८४ ॥
नावजानामि विषयाञ्जाने लोकं तदात्मकम् ।
अनित्यं तु जगन्मत्वा नात्र मे रमते मनः॥ ८५ ॥

तान् शास्त्रकारादिभिर्निन्दितानपि विषयान् स्त्रीरूपान् रतिहेतोः प्रीत्यर्थं बुभुजिरे भुक्तवन्तः । गुणसंहितान् गुणैः प्रशंसनीयैर्धर्मैः संहितान् युक्तांस्तु ततः प्रागेव ततः पूर्वमेव बुभुजिर इत्यनुवर्तते । गर्हितानपि विषयान् बुभुजिरे किमु वक्तव्यं गुणवतो बुभुजिर इतीति भावः । कविरयं किं पुनरित्यर्थ एव प्रागेवेति शब्दं व्यवहरति। प्रयुक्तं चैतेन सर्ग एतस्मिन्नेव 'प्रागेव वसुधामिमाम्' इत्यत्रैवम् ।

( ८२ ) त्वमिति। पुनः किन्तु त्वं कर्ता रूपवान् सुरूपसंपन्नः। प्राशस्त्येमतुप्। एवमुत्तरत्रापि। गुणवान् प्रशस्तगुणयुक्तः । युवा तरुणः सन्नपि । एतेन विषयोपभोगक्षमत्वं ध्वन्यते। यत्र येषु इदं प्रत्यक्षतो दृश्यमानं जगत् भुवनं सक्तं आसक्तं तानिति शेषः। न्यायतः न्यायेन प्राप्तान् उपस्थितान् लब्धान्वा विषयान् स्त्रीरूपानिति भावः। अवजानासि-अवमन्यसे। 'अनुपसर्गाज्ज्ञ' इत्युक्तेः परस्मैपदम्। नैतद्युक्तमिति भावः।

( ८३ ) इतीति । इति एवंप्रकारं तस्य उदायिनः वचनं श्रुत्वा मेघस्तनितनिर्घोषः मेघानां स्तनितं गर्जितमिव निर्घोषो ध्वनिर्यस्य तथाभूतः । मेघगम्भीरवागित्यर्थः । कुमारः राजपुत्रः कर्ता श्लक्ष्णं मनोहरं आगमसंहितं आगमेन शास्त्रेण संहितं संबद्धं च यथातथा प्रत्यभाषत उत्तरं प्रादात्। श्लक्ष्णं मनोहरमिति कल्पद्रुमः।

( ८४ ) उत्तरमाह षोडशभिः । उपपन्नमिति । इदं त्वया कृतं सौहार्दव्यञ्जकं सुहृदो भावः सौहार्दं मित्रत्वं तस्य व्यञ्जकं द्योतकम् । सुहृच्छब्दाद्युवादित्वाद्भावेऽणि 'हृद्भगसिन्ध्वन्ते' इत्युभयपदवृद्धिः । वाक्यं वचनं त्वयि उपपन्नं युक्तम्। अत्र च अस्मिंश्च विषये त्वा त्वां अनुनेष्यामि प्रसादयिष्यामि । अत्रेति केत्याह । यतः यस्माद्विषयात् हेतुभूतात् । मा मां दुष्टु निन्दितं मन्यसे तस्मिन्नत्र विषय इति संबन्धः। 'निन्दायां दुष्टु सुष्टु प्रशंसने।' इत्यमरः । प्रसीद मास्तु ते विषयेऽत्र निर्बन्ध इति भावः । 'कथं नु शक्योऽनुनयो महर्षेरित्यादिषु कालिदासादिपद्येषु प्रसादनार्थकोऽनुनयतिः संदृश्यः ।

( ८५ ) तत्किमनादरणीयानेव मन्यसे विषयान्? इति चेत्तत्राह । नेति अहमित्यध्याहार्यम्। अहं विषयान् स्त्रीप्रभृतीन् न अवजानामि न अवमन्ये। 'अनु-

१ बलवान् रूपवान्। २ द्वितीयतुर्थचरणयोः परिवृत्तिः क्वापि। ३ यत्र।

जरा व्याधिश्च मृत्युश्च यदि न स्यादिदं त्रयम्।
ममापि हि मनोज्ञेषु विषयेषु रतिर्भवेत्॥ ८६॥
नित्यं यद्यपि हि स्त्रीणामिदमेव वपुर्भवेत्।
ससंवित्कस्य कामेषु तथापि न रतिः क्षमा॥ ८७॥
यदीदं[1] जरया पीतं रूपमासां भविष्यति।
आत्मनोऽप्यनभिप्रेतं मोहात्तत्र ततो[2] रतिः॥ ८८॥
मृत्युव्याधिजराधर्मा मृत्युव्याधिजरात्मसु[3]।
रममाणोऽप्यसंविग्नः समानो मृगपक्षिभिः॥ ८९॥

---

पसर्गाज्ज्ञ' इति नियमात्परस्मैपदं, तत एव चोत्तरत्र जान इत्यात्मनेपदम्। लोकं जनं च तदात्मकं तेषु विषयेषु आत्मा मनो यस्य तथाभूतं जाने। विषयस्वरूपतां प्राप्तं वा जान इत्यर्थः। तदेकतानत्वात्तदात्मकता। तु किन्तु जगत् अनित्यं अशाश्वतं नश्वरमित्यर्थः इति मत्वा विचार्य मे मतिः अत्र एतेषु विषयेषु न रमते।

(८६) तत्किं नैवात्र ते प्रीतिरितिचेत्तत्राह। जरेति। जरा वार्धकं व्याधिः रोगः मृत्युश्च इति एतत् त्रयं यदि न स्यात् तदा ममापि हि निश्चयेन मनोज्ञेषु मनोहरेषु 'मनोज्ञं मञ्जु मञ्जुलम्।' इत्यमरः। विषयेषु रतिः प्रीतिः भवेत्। यतश्च त्रितयमप्येतदवश्यम्भावि ततो नैव शक्यते तत्र प्रीतिं कर्तुमिति भावः।

(८७) एतस्मिंश्च त्रितये मृत्योरभावेऽपि नैव स्त्रीषु रतिः कर्तुं शक्येत्याह। नित्यमिति। यद्यपि स्त्रीणां इदं पुरो दृश्यमानमेव वपुः शरीरं हि निश्चयेन नित्यं अविनाशि भवेत् तथापि, नैतच्छक्यसंघटनं तथापि यदि कदाचिदित्थं घटेत तदापीत्यर्थः। ससंवित्कस्य संविदा चेतनया सह वर्तते ससंवित्कस्तस्य। 'संवित्प्रतिपज्ज्ञप्तिचेतनाः'। इत्यमरः। चेतनावतः पुरुषस्येत्यर्थः। कामेषु विषयेषु रतिः प्रीतिः क्षमा योग्या न।

(८८) कुत एतदित्याह। यदीति। यदि इदं संप्रति साक्षात्क्रियमाणं आसां रूपं आकारः जरया वार्धकेन पीतं प्राशितं सत् आक्रान्तं सदित्यर्थः। आत्मनः स्वस्यापि अनभिप्रेतं अनभीष्टं अप्रियमित्यर्थः। भवति ततः तर्हि तत्र तस्मिन् रूपे रतिः मोहात् अज्ञानादेव भवतीति शेषः। अत एव च ज्ञानवतां नात्र प्रीतिसंभव इति भावः।

(८९) मोहादेव विषयेषु प्रवृत्तिरित्युक्तिं द्रढयति। मृत्युव्याधीति। मृत्युव्याधिजराधर्मा मृत्युः व्याधिर्जरा चेत्येते धर्मा यस्य तथाभूतः। 'धर्मादनिच् केवलादि'त्यनिच्। मृत्युव्याधिजरात्मसु मृत्युर्व्याधिर्जरा चेत्येत आत्मा स्वभावो येषां तेषु स्त्रीप्रभृतिषु विषयेषु रममाणः रतिं कुर्वाणः अपि असंविग्न उद्वेगमप्राप्तः पुरुषः मृगपक्षिभिः मृगैः पशुभिः पक्षिभिश्च समानस्तुल्यः। विवेकशून्यत्वादिति भावः। अत्र संपूर्वो विजतिरुद्वेगे।

---

१ यदा तु। २ रतिर्भवेत्। ३ जरात्मभिः।

यद्प्यात्थ महात्मानः[1] केऽपि कामात्मका इति ।
संवेगोऽत्र न कर्तव्यो यतस्[2]तेषामपि क्षयः ॥ ९० ॥

माहात्म्यं नैवं[3] तन्मध्ये यत्र सामान्यवत्क्षयः[4] ।
विषयेषु प्रसक्तिर्वा युक्तिर्वा नात्मवत्तया ॥ ९१ ॥

यद्प्यात्थानृतेनापि स्त्रीजने वृत्यतामिति[5] ।
अनृतं नावगच्छामि दाक्षिण्येऽपि[6] च किंचन ॥ ९२ ॥

(९०) अथ यन्महात्मभिरप्यनुशीलितोऽयं पन्था इति दृष्टान्तानुपदर्शयता प्रतिपादितं तत्राह । यदपीति । यदपि यच्च केपि महात्मानः कामात्मकाः कामेषु विषयेष्वात्मा मनो येषां तथाभूताः । विषयासक्तचेतस इत्यर्थः । इति आत्थ ब्रवीषि । 'ब्रुवः पञ्चानामि' त्यादिना सिपस्थलि ब्रुव आहादेश 'आहस्थ' इतिं थः । तत्रोच्यत इति शेषः । अत्र महात्मानोपि विषयेषु रमन्त इत्येतस्मिन्विषये संवेगः संभ्रमः। 'समौ संवेगसंभ्रमौ' इत्यमरः । न कर्तव्यः । हर्षवशात्सत्वरं प्रवृत्तिः संभ्रमः । महात्मानो रमन्त इत्येतावतैवानन्दातिशयमनुप्राप्य नैव सत्वरं विषयेषु प्रवर्तितव्यमिति भावः । कुत इत्याह । यत इति । यतः यस्मात्तेषां भवदुक्तानां महात्मनामपि क्षयः नाशः मरणमित्यर्थः । आसीदिति शेषः । सर्वेऽपि हि भवन्निर्दिष्टा महात्मानो मृता एवेति भावः ।

(९१) अथ यद्यपि मृतास्ते तथापि महात्मान एवेति दीयतां करावलम्बस्तेषामाचारायेति चेन्नैव ते महात्मानो य इत्थंविधा इत्याह । माहात्म्यमिति । यत्र येषु सामान्यवत् साधारणजनवत् क्षयो नाशः अस्तीति शेषः । 'अस्तिर्भवन्ती (वर्तमान) परोऽप्रयुज्यमानोऽप्यस्ती'ति वामनवचनात् । वा अथवा विषयेषु प्रसक्तिः प्रकृष्टा सक्तिः । अत्यन्तमासक्तिरित्यर्थः । अस्तीति शेषः । वा अथवा आत्मवत्तया आत्मा धैर्यं अस्ति येषां त आत्मवन्तस्तेषां भावस्तया । धैर्यसम्पन्नतयेत्यर्थः । युक्तिः योगः चित्तवृत्तिनिरोध इत्यर्थः । 'योगश्चित्तवृत्तिनिरोध' इति पतञ्जलिः । न नास्ति । 'आत्मा यत्नो धृतिर्बुद्धिरि'त्यमरः । तन्मध्ये तेषां मध्ये तेष्वित्यर्थः । माहात्म्यं महात्मत्वं नैव नास्त्येव । अत एव भवदुदाहृतानां पुरुषाणां महात्मत्वाभावान्नानुशीलनीयस्तदीयः पन्था अस्माभिरिति भावः ।

(९२) उपदेशान्तरं प्रत्याचष्टे । यदपीति । यदपि यच्च अनृतेन मिथ्यात्वेन कपटेनेति यावत् । स्त्रीजने स्त्रीसमूहविषये वृत्यतां वृत्तिः क्रियताम् । त्वयेति शेषः । इति आत्थ ब्रवीषि । तत्रोच्यत इति शेषः । वचनमाह । अनृतमिति । अहमिति शेषः । दाक्षिण्येऽपि च अनुकूलतानिमित्तमपि च किंचन किमपि अनृतं असत्यं नावगच्छामि न जाने । अनृतानभिज्ञत्वादेव तथा कर्तुं न प्रभवामीति भावः ।

१ नस्तेऽपि । २ यदा । ३ न च । ४ सामान्यतः । ५ वर्त्यता । ६ ण्येनापि ।

न चानुवर्तनं तन्मे रोचते यत्र नार्जवम्।
सर्वभावेन संपर्को यदि नास्ति धिगस्तु तत् ॥ ९३ ॥

अनृते श्रद्दधानस्य सक्तस्यादोषदर्शिनः।
किं न वञ्चयितव्यं स्याज्जातरागस्य चेतसः ॥ ९४ ॥

वञ्चयन्ति च यद्येवं जातरागाः परस्परम्।
ननु नैवापि क्षमा द्रष्टुं नराः स्त्रीणां नृणां स्त्रियः ॥ ९५ ॥

तदेवं सति दुःखार्तं जरामरणभोगिनम्।
न मां कामेष्वनार्येषु प्रचारयितुमर्हसि ॥ ९६ ॥

---

(९३) छद्ममयं चानुकूलनमात्मनोऽसम्मतिप्रदर्शनपूर्वकं विनिन्दति। नेति। यत्र यस्मिन् अनुवर्तने आर्जवं ऋजुनो भावः सरलत्वं, कपटपशून्यत्वमित्यर्थः। न नास्ति तत् अनुवर्तनं आनुकूल्यं मे मह्यं न रोचते। 'रुच्यर्थानां प्रीयमाण' इति संप्रदानत्वाच्चतुर्थी। यदि सर्वभावेन सर्वप्रकारेण सर्वात्मनेत्यर्थः। संपर्कः सम्बन्धः नास्ति तदेति शेषः तत् अनुवर्तनं धिक्। 'धिगुपर्यादिषु त्रिषु।' इति द्वितीया। अस्तु। गर्हणीयं तदिति भावः। कापटिकाः किलाभीष्टमेवात्मनः साधयितुं संसृज्यन्ते नैव तु सर्वात्मनेति धिक्कपटमूलमनुवर्तनमिति भावः।

(९४) अनृतस्यानर्थमूलकत्वप्रतिपादनमुखेनानादरणीयतामाचष्टे। अनृत इति अनृते असत्ये कपट इति यावत्। श्रद्दधानस्य विश्वसतः। इदमेवाभीष्टं साधयिष्य-तीति विश्वासं कुर्वाणस्येत्यर्थः। सक्तस्य अदोषदर्शिनः दोषान् विषयगतान् द्रष्टुं शीलं यस्य तथाभूतं न भवति तस्य। जातरागस्य जातः रागोऽनुरागो यस्मिंस्तस्य मनसः। 'कृत्यानां कर्तरि वा' इति वैकल्पिकी षष्ठी। वञ्चयितव्यं वञ्चनीयं किं न स्यात्। सर्वमपि वञ्चनीयं स्यादित्यर्थः। अनृते किल श्रद्दधानमदोषदर्शि जातरागं चेतः सर्वा-नपि वञ्चयेत् दुस्त्यजत्वात्प्रकृतेरिति भावः। अतश्च नैवंविधे पथि मनः प्रवर्तनीय-मिति भावः।

(९५) वञ्चयन्तीति। च किंच यदि जातरागाः उत्पन्नप्रेमाणो मनुष्याः पर-स्परं अन्योन्यं वञ्चयन्ति प्रतारयन्ति। तदेति शेषः। ननु हे उदायिन् स्त्रीणां नराः पुरुषाः नृणां पुरुषाणाम्। 'नृ चे' ति विकल्पाद्दीर्घाभावः। स्त्रियश्च द्रष्टुमपि न क्षमाः न योग्याः। कृद्योगे कर्तरि षष्ठी। स्त्रीभिः पुरुषाः पुरुषैश्च स्त्रियो द्रष्टुमपि न योग्या इत्यर्थः। प्रतारकाणां हि दर्शनमपि न योग्यमनिष्टजनकत्वात्कुतः पुनः संसर्गान्तरमिति भावः।

(९६) प्रार्थ्यते। तदिति। तत् तस्मात् एवं सति अस्योक्तस्य प्रकारस्य विद्यमानत्वादित्यर्थः। जरामरणभोगिनं जरां मरणं च भोक्तुं शीलं यस्य तथाभूतं

---

१ रुचितं। २ हि। ३ नैव। ४ क्षमं। ५ प्रतारयितुम्।

**अहो सुधीरं बलवच्च ते मनश्चलेषु कामेष्वपि सारदर्शिनः ।**
**भयेऽपि तीव्रे विषयेषु सज्जसे निरीक्षमाणो मरणाध्वनि प्रजाः ९७**

**अहं पुनर्भीरुरतीव विक्लवो जराविपद्व्याधिभयं विचिन्तयन् ।**
**लभे न शान्तिं न धृतिं कुतो रतिं निशामयन्दीप्तमिवाग्निना जगत्॥**

---

तत एव च दुःखार्तं दुःखेन पीडितं मां अनार्येषु अशोभनेषु कामेषु विषयेषु प्रचारयितुं संचारयितुं नार्हसि न योग्यो भवसि । मा तावन्मां विषयोपभोगेषु प्रवर्तयेति भावः । 'आर्यः साधौ सौविदल्ले' इति विश्वः ।

( ९७ ) न केवलं ममैव विषयेषु प्रवर्तनमपि तु तवाप्यत्र नैव युक्ता प्रवृत्तिरित्याह । अहो इति । अहो इति आश्चर्ये । चलेषु चञ्चलेषु क्षणिकेष्वपीत्यर्थः कामेषु विषयेषु । अपिर्भिन्नक्रमश्चलेष्वित्यतः परं योज्यः । सारदर्शिनः सारशब्दोऽत्र भावप्रधानः । सारं उत्कृष्टतां द्रष्टुं शीलं यस्य तथाभूतस्य । दृशेस्ताच्छील्ये णिनिः । ते मनः कर्तृ सुधीरं सुतरां अत्यन्तं धीरं धैर्यसम्पन्नं विद्वद्वा बलवत् सामर्थ्यसम्पन्नं च अस्ति । 'न्याय्ये क्लीबं त्रिषु वरे ( श्रेष्ठे )' इति वरशब्दार्थेषु मेदिनी । 'धीरः स्यात्त्रिषु पण्डिते । स्वच्छन्दे धैर्ययुक्ते च' इत्यपि स एव । प्रजा लोकान् ( स्वसजातीयान् ) मरणाध्वनि मरणस्य मार्गे वर्तमानाः निरीक्षमाणः पश्यन् तीव्रे आत्यन्तिके भये मरणजन्य इत्यर्थः सत्यपि विषयेषु सज्जसे सक्तो भवसि । 'तीव्रैकान्तनितान्तानि' इत्यात्यन्तिकपर्यायेष्वमरः । आत्मनः समानधर्मणो लोकान्मरणाध्वनि पश्यता बलवदेव भेतव्यं पुरुषेण त्वं तु न केवलं न बिभेषि प्रत्युत विषयेषु सज्जसे क्षणिकेष्वपि च विषयेषु सारं पश्यसीत्यहो ते मनसो धैर्यं च सामर्थ्यं चेति भावः । अनभिज्ञोऽसीति सारः । वंशस्थं वृत्तं 'जतौ तु वंशस्थमुदीरितं जरौ' इत्युक्तेः । एवमुत्तरत्रापि श्लोकपञ्चके ।

( ९८ ) मम त्वेतन्नास्तीत्याह । अहमिति । पुनः किन्तु अहं कर्ता जगत् अग्निना दीप्तं प्रज्वलितमिव निशामयन् पश्यन् । 'शमो दर्शने' इति शाम्यतेर्दर्शनार्थे मित्त्वाभावाण्णिचि ह्रस्वत्वाभावे रूपम् । 'निशामनं दर्शने स्यात्' इति मेदिनी । जराव्याधिमृत्युभिः समाक्रान्तत्वाज्जगत इति भावः । तत एव च जराविपद्व्याधिभयं जरा वार्धकं च विपन्मरणं च व्याधयो रोगाश्च तेभ्यो भयं विचिन्तयन् विचारयन् सन् । अवश्यम्भाव्येतेभ्यो भयमिति मनसि कुर्वन्सन्नित्यर्थः । भीरुः अतीव अत्यन्तमेव च विक्लवः व्याकुलः अस्मीति शेषः । 'अधीरे कातरत्रस्तभीरुभीलुकभीरुकाः ।' इत्यमरः । अत एव च शान्तिं स्वस्थतां न लभे न प्राप्नोमि धृतिं धैर्यमपि, न लभे इत्यनुवर्तते । रतिं विषयासक्तिं कुतः ? न कुतोऽपि रतिं प्राप्नोमीत्यर्थः । शान्तिधैर्यमूलकत्वाद्रतेस्तयोरभावे कुतो मयि रतेर्भाव इति भावः ।

---

१ अहोऽतिधीरं ।

असंशयं मृत्युरिति प्रजानतो नरस्य रागो हृदि यस्य जायते ।
अयोमयीं तस्य परैमि[1] चेतनां महाभये वक्षसि यो न रोदिति ९९
अथो कुमारश्च विनिश्चयात्मिकां चकार कामाश्रयघातिनीं कथाम्
जनस्य चक्षुर्गमनीयमण्डलो महीधरं चास्तमियाय भास्करः १००
ततो वृथाधारितभूषणस्रजः कलागुणैश्च प्रणयैश्च निष्फलैः ।
स्व एव भावे विनिगुह्य मन्मथं पुरं ययुर्भग्नमनोरथाः स्त्रियः १०१

(९९) सत्यामपि मृतिभीतौ विषयेषु रममाणं विनिन्दंस्तन्मुखेनोदायिनं गर्हयति । असंशयमिति । असंशयं निःसंशयं यथातथा मृत्युः अस्तीति शेषः । इति प्रजानतः प्रकर्षेण बुध्यमानस्य यस्य नरस्य पुरुषस्य हृदि मनसि रागः वैषयिकं प्रेम जायते उत्पद्यते तस्य नरस्य चेतनां बुद्धिं 'प्रतिपज्ज्ञप्तिचेतनाः' इति बुद्धिपर्यायेष्वमरः । अयोमयीं अयसो लोहस्य विकारः अयोमयी ताम् । लोहघटितामित्यर्थः । विकारार्थे मयट्, टित्त्वान्ङीप् । परैमि प्रत्येमि मन्य इत्यर्थः। 'परागतः प्रवीर' इत्यादौ परोपसर्गस्य प्रतिसमानार्थकत्वसंदर्शनात्परैमीत्यस्य प्रत्येमीत्यर्थ इति प्रतीयते । प्रतिपूर्वकस्त्वेतिर्ज्ञाने । वस्तुतः पुनः परापूर्वक एतिर्ज्ञानार्थेऽवाचक एव, तस्य मरणार्थ एव प्रसिद्धेरिति बोध्यम् । यः महाभये मृत्युरूपे महति भये । 'नास्ति मृत्युसमं भय' मित्युक्तेः । वक्षसि उरःप्रदेशे सत्यपि अत्यन्तसन्निहितेपीत्यर्थः । न रोदिति न शोचतीत्यर्थः । तस्य चेतनामिति पूर्वेण संबन्धः ।

(१००) अथो इति । अथो अनन्तरं कुमारः राजपुत्रः कामाश्रयघातिनीं कामानां विषयाणां आश्रयं आधारं घातयति नाशयति तथाभूतां कथां भाषितमित्यर्थः। विनिश्चयात्मिकां विशिष्टो निश्चयो विनिश्चयः स आत्मा स्वरूपं यस्यास्तथाभूतां सुनिश्चितस्वरूपामित्यर्थः । चकार च कृतवांश्च । कामनिर्मूलनविषये बलवन्तं निश्चयं चकारेति भावः । भास्करः सूर्यः जनस्य लोकस्य । षष्ठ्याश्चक्षुषा संबन्धः । चक्षुर्गमनीयं चक्षुषा गमनीयं गन्तुं प्राप्तुं शक्यं द्रष्टुं शक्यमित्यर्थः । मण्डलं बिम्बं यस्य तथाभूतः सन् अस्तं नाम महीधरं इयाय गतवांश्च । इण् गतावित्यतो लिट् । अस्तं गते सवितरि कामनिर्मूलनविनिश्चयं चकारेत्यर्थः ।

(१०१) तत इति । ततः कुमारस्य कामनिर्मूलनविनिश्चयानन्तरं भग्नमनोरथाः भग्नः मनोरथः राजपुत्रं वशीकरष्याम इत्येवंरूपोऽभिलाषो यासां तथाभूताः । अत एव निष्फलैः राजकुमारस्य वशीकरणाभावात्फलशून्यैः कलागुणैः नृत्यगीतादिकलारूपैर्गुणैः प्रणयैः कामिषु प्रयोज्यैः प्रेमभिश्च उपलक्षिताः । उपलक्षणे तृतीया । अत एव च वृथाधारितभूषणस्रजः वृथा व्यर्थमेव धारिता भूषणान्यलङ्करणानि स्रजो मालाश्च याभिस्तथाभूताः स्त्रियः कन्यैः स्वे स्वीय एव भावे मनसि मन्मथं

१ रक्षति ।

ततः पुरोद्यानगतां जनश्रियं निरीक्ष्य सायं प्रतिसंहृतां पुनः ।
अनित्यतां सर्वगतां विभावयन्विवेश धिष्ण्यं क्षितिपालकात्मजः॥

ततः श्रुत्वा राजा विषयविमुखं तस्य स मनो
न शिश्ये तां रात्रिं हृदयगतशल्यो गज इव ।
अथ श्रान्तो मन्त्रैर्बहुविविधमार्गैः ससचिवो
न चान्यत्कामेभ्यो नियमनमपश्यत्सुतमतेः ॥ १०३ ॥

इति श्रीबुद्धचरिते महाकाव्ये स्त्रीविघातनं नाम

## चतुर्थः सर्गः

मदनं विनिगुह्य गोपयित्वा विलीनं कृत्वेत्यर्थः । पुरं नगरं ययुः गतवत्यः । वृथाधारितेत्यादौ भग्नमनोरथत्वस्य हेतुत्वात्पदगतहेतुकं काव्यलिङ्गमलङ्कारः ।

( १०२ ) तत इति । ततः क्षितिपालकात्मजः राजपुत्रः कर्ता । स्त्रीणां पुरगमनानन्तरं पुरोद्यानगतां पुरस्य नगरस्य संबन्धिनि उद्यान उपवने गतां विद्यमानां जनश्रियं जनानां सम्बधीनीं श्रियं शोभां सायं दिनान्ते प्रतिसंहृतां नष्टामिति यावत् । निरीक्ष्य दृष्ट्वा पुनः पुनरपि अनित्यतां क्षणिकतां सर्वगतां सर्वेष्वपि वस्तुषु विद्यमानां विभावयन् निश्चिन्वन्निति यावत् । धिष्ण्यं गृहं विवेश प्रविष्टवान् । 'धिष्ण्यं धाम निकेतनं च सदन' मिति गृहपर्यायेषु हलायुधः । आदितस्तावत्सर्वेषां विषयाणां क्षणिकत्वं प्रतीतमेव राजपुत्रेण तत्रापि च पुनः पुरस्तादिव साक्षात्क्रियमाणाया जनश्रियो नाशस्य संदर्शनात्सर्वेषामपि भावानां नश्वरत्वमिति दृढीभूतोऽस्य विचार इति भावः ।

( १०३ ) ततः इति । ततः कुमारस्य गृहप्रवेशानन्तरं सः राजा शुद्धोदनः तस्य पुत्रस्य मनः विषयविमुखं विषयेभ्यः पराङ्मुखं श्रुत्वा हृदयगतशल्यः हृदये गतं प्रविष्टं शल्यं बाणाग्रादि यस्य तथाभूतः गज इव सन् तां रात्रिं तस्यामशेषायामपि रात्रावित्यर्थः । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । न शिश्ये निद्रां न लब्धवान् । अथ श्रान्तः श्रमं प्राप्तः खिन्न इत्यर्थः । ससचिवः सचिवैः राजकर्मणि साहाय्यकारिभिः पुरुषैः सह वर्तमानः सन् बहुविविधमार्गैः बहवः विविधा विभिन्नप्रकारा मार्गाः प्रवृत्तिद्वाराणि येषां तैः मन्त्रैः गुप्तैरालापैः साधनभूतैः । 'गुह्यवादेऽपि च पुमान्' इति मन्त्रशब्दार्थेषु मेदिनी । अत उत्तरमेव वा श्रान्त इति योज्यम्। श्रमप्राप्तिपर्यन्तं वा मन्त्रिभिः सार्कं विचार्येति भावः । कामेभ्यः विषयेभ्यः अन्यत् भिन्नम् । 'अड्डतरादिभ्य' इत्यद्डादेशः । सुतमतेः पुत्रस्य बुद्धेः नियमनं नियम्यते निगृह्यते अनेन नियमनं निग्रहसाधनं । करणे ल्युट् । न अपश्यत् नैव दृष्टवान् ।

१ विचारयन् । २ तु । ३ मन्त्रे बहुविविधमार्गे, मन्त्रे सुबहुविधमार्गे । ४ सोऽन्यत् । ५ स्त्री विघातनो ।

श्रीशिवः शरणम् ।

# बुद्धचरिते पञ्चमः सर्गः ।

स तथा विषयैर्विलोभ्यमानः परमोहैरपि शाक्यराजसूनुः ।
न जगाम रतिं न शर्म लेभे हृदये सिंह इवास्त[1] दिग्धविद्धः ॥ १ ॥
अथ मन्त्रिसुतैः क्षमैः कदाचित्सखिभिश्चित्रकथैः कृतानुयात्रः ।
वनभूमिदिदृक्षया शमेप्सुर्नरदेवानुमतो बहिः प्रतस्थे ॥ २ ॥

सचिवैः समं संमन्त्र्यापि कामा एवास्य हृदयावर्जने क्षमा नान्यत्किमपीति निश्चितवानित्यर्थः । एतेन राज्ञः पुनरपि पुत्रे विषयप्रयोग इत्येवंरूपो भाविसर्गार्थः सूच्यते । शिखरिणीवृत्तम् । 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी'ति लक्षणात् ।

इति श्रीमत्पण्डितराजवंशावतंसवैयाकरणशेखरश्रीमत्कान्ताचार्यसूरिणां छात्रेण
श्रीमत्सदाशिवबुधेन्द्रसूनुना राशिवडेकरेण श्रीअप्पाशर्मविद्यावाचस्पति-
विद्यालङ्कारमहोपदेशकेन विनिर्मितायां बालबोधिन्याख्यायां
बुद्धचारितव्याख्यायां चतुर्थः सर्गः ॥

## बुद्धचरितव्याख्यायां बालबोधिन्यां पञ्चमः सर्गः ।

( १ ) स इति । स शाक्यराजसूनुः शुद्धोदनपुत्रो बुद्धः कर्ता तथा तेन पूर्वसर्गोक्तेन प्रकारेण परमोहैः पर आत्यन्तिको मोहो मोहनशक्तिरित्यर्थः येषु तथाभूतैः । हृदयस्यातिमात्रमेव मोहजनकैरित्यर्थः । विषयैः स्त्रीप्रभृतिभिः करणभूतैः विलोभ्यमानोपि विशिष्टं लोभं विषयविषयकमभिलाषं प्राप्यमाणोऽपि आवर्ज्यमानोऽपीत्यर्थः । रतिं प्रीतिं न जगाम न प्राप शर्म सुखं न लेभे न प्राप्तवान् । 'शर्मशातसुखानि च' इत्यमरः । किं तर्हि चकारेत्याह । हृदय इति । हृदये वक्षःप्रदेशे दिग्धविद्धः दिग्धेन विषाक्तेन बाणेन विद्धः कृतवेधः सिंह इव आस्त आसीत् । आस्तेरुपवेशनार्थकत्वेऽपि रूढ्या सत्तायामपि वृत्तिः । यथा विषाक्तेन बाणेन विद्धः सिंहो व्याकुलत्वमुपयात्येवं व्याकुलीभावं भेज इति भावः । 'दिग्धो लिप्ते विषाक्ते च' इति त्रिकाण्डशेषः । मालभारिणी वृत्तम् । 'विषमे ससजा यदा गुरू चेत्सभरा येन तु मालभारिणीयम्' इति लक्षणात् । इदमेव चाष्टसप्ततितमं पद्यं यावत् ।

( २ ) अथेति । अथ अनन्तरं कदाचित्कस्मिंश्चित्समये क्षमैः योग्यैः चित्रकथैः चित्राः आश्चर्यजनिकाः कथा येषां तथाभूतैः आश्चर्यजनिकानां कथानां कर्तृभिरित्यर्थः । सखिभिः मित्रैः मन्त्रिपुत्रैः मन्त्रिणां सचिवानां पुत्रैः कृतानुयात्रः कृता

१ इवाति, ।

**नवरुक्मखलीनकिङ्किणीकं प्रचलच्चामरचारुहेमभाण्डम् ।**
**अभिरुह्य स कण्ठकं सदश्वं प्रययौ केतुमिव द्रुमाब्जकेतुम् ॥ ३ ॥**
**स विकृष्टतरां वनान्तभूमिं वनलोभाच्च ययौ महागुणेच्छुः[1] ।**
**सलिलोर्मिविकारसीरमार्गां वसुधां चैव ददर्श कृष्यमाणाम् ॥ ४ ॥**

अनुयात्रा अनुगमनं यस्य तथाभूतः । अनुगम्यमान इत्यर्थः । शमेप्सुः शमं शान्तिं ईप्सति आप्तुं ( प्राप्तुं ) इच्छति तथाभूतः । ईप्सतीति आप्नोतेः सनि आप्ज्ञप्यृधामितीत् । नरदेवानुमतः नरदेवेन राज्ञा शुद्धोदनेन अनुमतः अनुमोदितः सन् वनभूमिदिदृक्षया वनभूमेः वनप्रदेशस्य दिदृक्षया द्रष्टुमिच्छया । दृशेः सन्नन्तादप्रत्यये टापि च दिदृक्षेति । बहिः प्रतस्थे प्रययौ प्रपूर्वकात्तिष्ठतेः प्रयाणार्थकात् 'समवप्रविभ्यः स्थ' इत्यात्मनेपदम् ।

( ३ ) नवेति स बुद्धः कर्ता नवरुक्मखलीनकिङ्किणीकं नवा नवीना रुक्मस्य सुवर्णस्य खलीनं कविका लगाम इति महाराष्ट्र्यां ख्याता च किङ्किण्यः क्षुद्रघण्टिकाश्च यस्य तथाभूतम् । 'कविका तु खलीनोऽस्त्री' त्यमरः । 'किङ्किणी क्षुद्रघण्टिका ।' इति च । प्रचलच्चामरचारुहेमभाण्डं प्रचलन्ति चामरं च हेमभाण्डानि सुवर्णमया अलङ्काराश्च यस्य तथाभूतम् । गतिवशात्प्रचलत्वमेतेषाम् । 'नदीपात्रे तुरङ्गाणां भूषणे भाजनेऽपि च ।' इति भाण्डशब्दार्थेषु विश्वः । द्रुमाब्जकेतुं द्रुमस्य पारिजातपुष्पस्य अब्जस्य श्वेतकमलस्येव च केतुः कान्तिर्यस्य तथाभूतम् । द्रुमशब्दात्पारिजातार्थकात्पुष्पमूलेषु बहुलमिति विकारप्रत्ययलुक् । 'द्रुमो महीरुहे पारिजाते किंपुरुषे स्वरे ।' इति मेदिनी । 'केतुर्द्युतौ पताकायाम्' इति विश्वः । केतुं ध्वजमिवोन्नतत्वाद्भासमानं कण्ठकं एतन्नामानं सदश्वं शोभनं तुरगं अभिरुह्य आरुह्य प्रययौ प्रयाणं कृतवान् ।

( ४ ) स इति । च किंच महागुणेच्छुः महान्तं महनीयं गुणं शान्तिरूपं इच्छति तथाभूतः । 'विन्दुरिच्छु' रितिनिपातनात्साधुः । स बुद्धः कर्ता वनलोभात् वनस्य विषये लोभः अभिलाषातिशयः तस्माद्धेतोः वनगमनाभिलाषेणेत्यर्थः । विकृष्टतमां अतिशयेन विकृष्टां कृतकर्षणाम् । वनान्तभूमिं वनस्य अन्तभूमिः समीपप्रदेशः ताम् । ययौ जगाम । या प्रापणे ( गतौ ) इत्यतो लिट् । वनगमनेच्छया प्रस्थितः स वनस्य सन्निहितं प्रदेशमादितो जगामेति भावः । 'न स्त्री शेषेऽन्तिके त्रिषु' इत्यन्तशब्दार्थेषु मेदिनी । चैव अपि च सलिलोर्मिविकारसीरमार्गां सलिलस्य ऊर्मिरूपो विकारः सीरस्य हलस्य मार्गे यस्यां तथाभूताम् । कृष्यमाणत्वाद्भूमेर्यावती कृष्टा तावत्यां हलस्य मार्गे ऊर्मिविशिष्टं सलिलमासीदित्यत उक्तं सलिलेत्यादि । 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रिया' मित्यमरः । 'लाङ्गलं हलम् । गोदारणं च सीरोऽथ' इति च । कृष्यमाणां हलेनोद्भिद्यमानां वसुधां भूमिं ददर्श दृष्टवान् । 'वसुधोर्वी वसुन्धरे'ति भूमिपर्यायेष्वमरः ।

१ महीगुणेच्छुः, गुणाच्छः ।

हलभिन्नविकीर्णशष्पदर्भां हतसूक्ष्मक्रिमिकाण्डजन्तुकीर्णाम्।
समवेक्ष्य रसां तथाविधां स[1] स्वजनस्येव वधे भृशं शुशोच ॥५॥
कृषतः पुरुषांश्च वीक्षमाणः पवनार्कांशुरजोविभिन्नवर्णान्।
वहनक्लमविक्लवांश्च धुर्यान्परमार्यः परमां कृपां बभार[2] ॥ ६ ॥
अवतीर्य ततस्तुरङ्गपृष्ठाच्छनकैर्गां व्यचरच्छुचा परीतः।
जगतो जननव्ययौ विचिन्वन्[3] कृपणं खल्विदमभ्यवोचतार्तः[4] ॥७॥

(५) हलेति। स बुद्धः कर्ता हलभिन्नविकीर्णशष्पदर्भां हलेन भिन्ना विदारिता तत एव च विकीर्णं तत इतः क्षिप्तं शष्पदर्भं (शष्पाणि कोमलतृणानि दर्भाश्च) यस्यां तथाभूताम्। हतसूक्ष्मक्रिमिकाण्डजन्तुकीर्णां हतानां मारितानां क्रिमीणां कीटकानां काण्डैः समूहैः जन्तुभिः प्राणिभिश्चान्यैः कीर्णां व्याप्ताम्। 'क्रिमिस्तु कृमिवत्कीटे' इति मेदिनी। 'काण्डो नालेऽधमे वर्गे (समूहे)' इति हैमः। 'प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः' इत्यमरः। तथाविधां तादृशीं रसां भुवं समवेक्ष्य दृष्ट्वा। 'जगती मेदिनी रसा।' इति हैमः। स्वजनस्य आत्मसंबन्धिनो जनस्य वधे सतीव भृशं अत्यन्तं शुशोच शोकं चकार। एतेन दयालुतातिशयो व्यज्यते।

(६) कृषत इति। च किंच परमार्यः परमः श्रेष्ठ आर्यः सज्जनः। सज्जनश्रेष्ठो बुद्ध इत्यर्थः। 'आर्यौ सज्जनसंविदौ' इति हैमः। कृषतः भूमिकर्षणं कुर्वतः पुरुषान् पवनार्कांशुरजोविभिन्नवर्णान् पवनेन वायुना अर्कांशुभिः सूर्यस्य किरणैः रजोभिः धूलिभिश्च विभिन्नः अन्यथात्वं प्राप्तो वर्णो येषां तथाभूतान्। अनवरतं भूकर्षणे व्यापृततया वायुना च रविकरैश्च समुत्थिताभिर्धूलिभिश्च शरीरवर्णस्यान्यथाभावः। च किंच धुर्यान् धूर्वहान् वृषभान् वहनक्लमविक्लवान् वहनस्य हलवहनक्रियायाः संबन्धिना क्लमेन ग्लान्या विक्लवान्व्याकुलीभूतान् वीक्षमाणः पश्यन् सन् परमां अतिशयितां कृपां दयां बभार धृतवान् मनसीत्यर्थात्। दयाकुलमना अभूदित्यर्थः।

(७) अवतीर्येति। ततः तदनन्तरं शुचा शोकेन परीतो व्याप्तः स बुद्ध इति कर्तृपदमध्याहार्यम्। तुरङ्गपृष्ठात् अश्वपृष्ठात् अवतीर्य अवरुह्य शनकैः शनैः (मन्दं मन्दं) गां भूमिं व्यचरत् विचरितवान्। भूमौ संचारं कृतवानित्यर्थः। शनकैरिति 'अव्ययसर्वनाम्नामकच् प्राक् टेः'रित्यकच्। 'गौर्गोत्रा भूतधात्री क्ष्मा'इति हैमः। शोकाकुलत्वान्मन्दगामित्वम्। किंच जगतः जननव्ययौ उत्पत्तिनाशौ विचिन्वन् आर्तः पीडितः सन् खलु निश्चयेन कृपणं दीनं यथातथा इदं वक्ष्यमाणं अभ्यवोचत उक्तवान्। 'वच उमि'त्युम्। अतः परं पद्येनैकेनापि वा विच्छिन्नेन भवितव्यमिति संभाव्यते। इदमभ्यवोचतेति हि निर्दिष्टं कविना नैव तु निर्दिष्टं वचनमिति। तत एव चासङ्गतिरिवात्र प्रतिभाति। कस्मिन्नपि पुनः पुस्तके नालोकितमत्र पद्यं किमपि।

१ तां। २ चकार। ३ विचिन्तयन् (?) ४ मित्युवाच चार्तः।

मनसा च विविक्ततामभीप्सुः सुहृदस्ताननुयायिनो निवार्य ।
अभितश्चलचारुपर्णवत्या[1] विजने मूलमुपेयिवान्स जम्ब्वाः ॥ ८ ॥
निषसाद स पत्रखण्डवत्यां[2] भुवि वैदूर्यनिकाशशाद्वलायाम् ।
जगतः प्रभवव्ययौ विचिन्वन्[3] मनसश्च स्थितिमार्गमाललम्बे ॥९॥
समवाप्तमनःस्थितिश्च सद्यो विषयेच्छादिभिराधिभिर्विमुक्तः[4] ।
सवितर्कविचारमाप शान्तं प्रथमं ध्यानमनाश्रवप्रकारम् ॥ १० ॥

---

( ८ ) मनसेति । च किंच मनसा हृदयेन विविक्ततां एकान्तभावं अभीप्सुः प्राप्तुमिच्छुः ईहमान इत्यर्थः । तान् अनुयायिनः अनुगामिनः सुहृदो मित्राणि विनिवार्य दूरीकृत्य निवर्त्येत्यर्थः । विजने एकान्ते अभितः परितः चलचारुपर्णवत्याः चलानि चञ्चलानि चारूणि मनोहराणि च पर्णानि पत्राणि सन्त्यस्यास्तथाभूतायाः । जम्ब्वा जम्बूवृक्षस्य मूलं उपेयिवान् गतवान् । एतेर्लिटः क्वसुः । ‘ विविक्तविजनच्छन्ननिःशलाकास्तथा रहः ।’ इत्यमरः ।

( ९ ) निषसादेति । स बुद्धः पत्रखण्डवत्यां पत्राणां वृक्षेभ्यो विगलितानां खण्डः समूहः अस्त्यस्यां तथाभूतायां वैदूर्यनिकाशशाद्वलायां विदूरे पर्वतविशेषे भवं वैदूर्यं रत्नविशेषः तस्य निकाशं तुल्यं शाद्वलं शादहरितः प्रदेशो यस्याः तथाभूतायां ‘ शादो जम्बालशष्पयोः ’ इति ‘ शाद्वलः शादहरिते ’ इति चामरः । मयूरकण्ठसदृशकान्तित्वाद्वैदूर्यस्य शाद्वलोपमानत्वम् । उक्तं हि राजनिर्घण्टे त्रयोदशे वर्गे वैदूर्यमधिकृत्य ‘ एकं वेणुपलाशपेशलरुचा मायूरकण्ठत्विषा मार्जारेक्षणपिङ्गलच्छविजुषा ज्ञेयं त्रिधा च्छायया । ’ इति । शाद्वलेति ‘ नडशादाड्ड्वलच् ’ इति ड्वलच् । भुवि भूमौ निषसाद उपविष्टवान् । निपूर्वः सदिरुपवेशने । च किंच जगतः लोकस्य प्रभवव्ययौ उत्पत्तिनाशौ विचिन्वन् विचारयन् मनसः स्थितिमार्गं स्थितेः स्थैर्यस्य मार्गं पन्थानं आललम्बे समाश्रितवान् । आङ्पूर्वाल्लम्बतेराश्रयार्थाल्लिट् । मनसः स्थैर्यसंपादनप्रयत्नं चकारेत्यर्थः ।

( १० ) समवाप्तेति । च किंच सद्यः तत्कालमेव समवाप्तमनःस्थितिः समवाप्ता प्राप्ता मनसः स्थितिः स्थैर्यं येन तथाभूतः । स्थिरीकृतान्तःकरण इत्यर्थः । तत एव च विषयेच्छादिभिः विषयवासनाप्रभृतिभिः आधिभिः मानसव्यथाभिः विमुक्तः त्यक्तः सन् । स्थिरचित्तमेनं स्वयमेवाधयो मुक्तवन्त इति विमुक्तपदेन द्योत्यते । आधिशब्दस्तद्धेतौ लाक्षणिकः । प्रथमं आदितः अनाश्रवप्रकारं आश्रवाणां क्लेशानां प्रकारो भेदो नास्ति यस्मिन्कर्मणि तद्यथा तथा । सवितर्कविचारं वितर्केण विचारेण च सह वर्तमानं शान्तं शान्तियुक्तं ध्यानं समाधिं ध्यानविशेष एव हि

---

१ अभितरल । २ पत्रकोर, सोऽत्र शौचवत्यां । ३ विचिन्त्य । ४ भिश्च मुक्तः ।

अधिगम्य ततो विवेकजातं[1] परमप्रीतिसुखं सुखं समाधिम् ।
इदमेव[2] ततःपरं प्रदध्यौ मनसा लोकगतिं निशाम्य[3] सम्यक् ॥११॥

कृपणं बत यज्जनः स्वयं सन्नरसो व्याधिजराविनाशधर्मा[4] ।
जरयार्दितमातुरं मृतं वा परमज्ञो विजुगुप्सते मदान्धः ॥ १२ ॥

---

समाधिरिति । अवाप प्राप्तवान् आलम्बितवानित्यर्थः । 'आश्रवोऽङ्गीकृतौ क्लेशे ।' इति मेदिनी । 'अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः ।' इति पतञ्जलिः (२।३) अनाश्रवप्रकारामित्यनेन 'तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोग' इत्युक्तलक्षणः क्रियायोगोऽप्यनेन प्रथमतः संपादित इति द्योत्यते । तस्यैव समाधिभावनार्थत्वा-त्क्लेशोन्मूलकत्वाच्च । तदुक्तं पतञ्जलिना 'समाधिभावनार्थः क्लेशतनूकरणार्थश्च (क्रियायोगः)।' इति (२।१) 'वितर्कविचारानन्दास्मितानुगमात्संप्रज्ञातः ।' इति च प्राह स एव (१।१७) वितर्कः चित्तस्यालम्बने स्थूल आभोगः, सूक्ष्मो **विचारः** । इति तद्भाष्यम् । 'स्वरूपसाक्षात्कारवती प्रज्ञा **आभोगः** स च स्थूलविषयत्वात्स्थूलः । यथा हि प्राथमिको धानुष्कः स्थूलमेव लक्ष्यं विध्यत्यथ सूक्ष्मं, एवं प्राथमिको योगी स्थूलमेव पाञ्चभौतिकं चतुर्भुजादि ध्येयं साक्षात्करोत्यथ सूक्ष्मम् । इति । एवं चित्तस्यालम्बने सूक्ष्म आभोगः स्थूलकारणभूतसूक्ष्मपञ्चतन्मात्रलिङ्गालिङ्ग-विषयो विचारः ।' इतिवाचस्पतिमिश्राः ।

(११) अधिगम्येति । ततः तदनन्तरं विवेकजातं विवेको विचारः अस्त्यस्मिन् विवेकः सविचारः समाधिरित्यर्थः। अर्श आदित्वादच् । ततो जातं विवेकजातं सविचारतः समाधेः परं समुद्भूतमित्यर्थः । सविचारपरभावी हि स्मर्यते सानन्दः समाधिर्भगवता पतञ्जलिना तज्जन्यता चास्य तद्भाष्यतः प्रतीयते । परमप्रीतिसुखं परमं श्रेष्ठमात्यन्ति-कमित्यर्थः प्रीतिसुखं आनन्दसुखं यस्मिंस्तथाभूतम् । 'मुत्प्रीतिः प्रमदो हर्ष' इत्यमरः । समाधिं सानन्दं नाम तृतीयं सम्प्रज्ञातं समाधिमित्यर्थः । सुखं यथा तथा अधिगम्य प्राप्य संपाद्येत्यर्थः । ततः परं मनसा लोकगतिं लौकानां स्थितिं सम्यक् निशाम्य दृष्ट्वा इदं वक्ष्यमाणमेव प्रदध्यौ चिन्तितवान् । ध्यै चिन्तायामित्यतो लिट् ।

(१२) चिन्तनीयमाह । कृपणमिति । बतेति खेदे कृपणं दैन्यास्पदं एत-दिति शेषः । किं तद्दैन्यास्पदं तदाह यदिति । यदिति स्वरूपनिर्देशे । जनो लोकः स्वयं व्याधिजराविनाशधर्मा व्याधयो रोगाः जरा वृद्धता विनाशो मरणं चेत्येते धर्मा यस्य तथाभूतः । 'धर्मादनिच् केवलात्' इत्यनिच् । अत एव च अरसः नास्ति रस आनन्दो यस्मिंस्तथाभूतः सन् आनन्दशून्यो दुःखी सन्नित्यर्थः । अज्ञः मदान्धः मदेन विष-यास्वादादिजन्मना अन्धः विचारशून्यः जरया वार्धकेन अर्दितं पीडितं आतुरं रोगिणं मृतं वा परं आत्मभिन्नं विजुगुप्सते विशेषेण निन्दति । 'गुप्तिज्किद्भ्यः'

---

१ विवेकजं तु । २ इममेव । ३ निशम्य । ४ धर्मः ।

इह चेदहमीदृशः स्वयं सन् विजुगुप्सेय परं तथास्वभावम्।
न भवेत्सदृशं न[1] तत्क्षमं वा परमं धर्ममिमं विजानतो मे ॥ १३ ॥
इति तस्य विपश्यतो यथावज्जगतो व्याधिजराविपत्तिदोषान्।
बलयौवनजीवितप्रवृत्तो[2] विजगामात्मगतो मदः क्षणेन ॥ १४ ॥
न जहर्ष न चापि नानुतेपे[3] विचिकित्सां न ययौ न तन्द्रिनिद्रे।
न च कामगुणेषु संररञ्ज न च दिद्वेष परं न चावमेने ॥ १५ ॥

---

इति सन् 'गुपेर्निन्दाया' मिति च तस्य निन्दार्थकता। अनुदात्तेत्त्वादात्मने पदम्। तदेतद्दैन्यास्पदमिति भावः। 'विकृतो व्याधितोऽपटुः। आतुर' इत्यमरः। अरस इत्यत्र 'अलस' इति क्वचिद्दृष्टः पाठः। आलस्ययुक्त इत्यर्थः। शक्तौ सत्यामपि आत्मनः श्रेयसे प्रवर्तमानत्वाभावादिति भावः।

(१३) एषा पुनरितरनिन्दा न मे योग्येत्याह। इहेति। इह अस्मिँल्लोके अहं स्वयं ईदृशः एवंप्रकारः जराव्याधिमरणधर्मेत्यर्थः सन् तथास्वभावं तथा तादृशः स्वभावो यस्य तथाभूतं जरादिधर्मविशिष्टमित्यर्थः। विजुगुप्सेय निन्देयं चेत् तर्हीति शेषः इमं धर्मं जरादिरूपं परमं आत्यन्तिकं अवश्यमनुवर्तिनमित्यर्थः। विजानतः विशेषेण जानानस्य मम तत् परनिन्दनं सदृशं योग्यं न भवेत् वा अथवा क्षमं शक्तिसंपन्नं बलवदपि न भवेत्। परनिन्दनं न मे योग्यं स्यात् अयोग्यमपि वा कृतं दुर्बलमेव स्यादिति भावः। 'वाच्यवच्छक्तहितयोः।' इति क्षमशब्दार्थेषु मेदिनी।

(१४) इतीति। इति एवंप्रकारेण जगतः व्याधिजराविपत्तिदोषान् व्याधयो रोगाश्च जरा च विपत्तिर्मरणं चेत्येतान्दोषान् यथावत् यथास्थितं विपश्यतः विशेषेण अवलोकयतः तस्य बुद्धस्य बलयौवनजीवितप्रवृत्तः बलं सामर्थ्यं यौवनं तारुण्यं जीवितं जीवनं च तेभ्यः प्रवृत्त उत्पन्नः। अहं बलिष्ठस्तरुणो जीवितशाली चेत्येवंरूप इत्यर्थः। आत्मगतः आत्मनि विद्यमानः मदः दर्पः क्षणेन विजगाम अपगतवान्। ननाशेत्यर्थः। सर्वमपि जगद्व्याधिग्रस्तं जरसाऽऽक्रान्तं मृत्युना च मुखे क्षिप्तं तत्क इव बलादिजन्यो मे दर्पः? अहमपि हि जगदन्तःपातित्वाद्व्याध्यादिवशादित्थमेव भविष्यामीति चिन्तयतः प्रशान्तोऽस्य बलादिदर्प इति भावः।

(१५) ततः किमित्याह। नेति। न जहर्ष स बुद्ध आनन्दं न प्राप्तवान्। आत्मनोऽपि जरादिविशिष्टत्वज्ञानादिति भावः। न चापि नवा न अनुतेपे अनुतापं न प्राप्तवान्। अवश्यमनुतापं प्राप्तवान् इत्यर्थः। द्वौ हि नञौ प्रकृतस्य द्रढयतीति। अनुपूर्वात्तप्यतेर्लिट्। विचिकित्सां आत्मना निश्चितेऽर्थे संशयम्। 'विचिकित्सा तु संशयः।' इत्यमरः। कितेः संशयार्थे सनि अप्रत्ययादित्यप्रत्यये

---

[1] हि। [2] प्रवृत्तौ। [3] नानुतेपे।

इति बुद्धिरियं च नीरजस्का ववृधे तस्य महात्मनो विशुद्धा ।
पुरुषैरपरैरदृश्यमानः पुरुषश्चोपससर्प भिक्षुवेषः ॥ १६ ॥
नरदेवसुतस्तमभ्यपृच्छद्वद कोऽसीति शशंस सोऽथ तस्मै ।
नरपुङ्गव[1] जन्ममृत्युभीतः श्रमणः प्रव्रजितोऽस्मि मोक्षहेतोः ॥ १७
जगति क्षयधर्मके मुमुक्षुर्मृगयेऽहं शिवमक्षयं पदं तत् ।
अजनोऽन्यजनैरतुल्यबुद्धिर्विषयेभ्यो विनिवृत्तरागदोषः ॥ १८ ॥

---

टापि च विचिकित्सेति । न ययौ न प्राप । तन्द्रिनिद्रे तन्द्रिः आलस्यं निद्रा च ते न ययौ न प्राप । च किंच कामगुणेषु विषयसंबन्धिषु गुणेषु न संरराज रागं न कृतवान् । उपसर्गोऽत्र धात्वर्थानुवर्ती । रञ्ज राग इत्यतो दैवादिकाल्लिट् । च किंच परं आत्मभिन्नं जनं न दिद्वेष द्वेषविषयं न कृतवान् च किंच न अवमेने न तिरस्कृतवान् । अवपूर्वान्मन्यतेर्लिट् ।

( १६ ) इतीति । च किंच तस्य महात्मनो बुद्धस्य इति एवंप्रकारा इयं पूर्वोक्ता नीरजस्का निर्गतं रजः रजोगुणो यस्याः सकाशात्तथाभूता रजोगुणसंपर्कशून्येत्यर्थः । तत एव च विशुद्धा विशेषेण शुद्धियुक्ता बुद्धिः ज्ञानं ववृधे वृद्धिं प्राप । च किंच अपरैः बुद्धभिन्नैः पुरुषैः अदृश्यमानः अनवलोक्यमानः भिक्षुवेषः भिक्षोः परिव्राजकस्य वेष इव वेषो यस्य तथाभूतः पुरुषः कश्चन पुरुषः उपससर्प एनमुपजगाम । अस्य समीपमागवतानित्यर्थः ।

( १७ ) नरेति । नरदेवसुतः राजपुत्रो बुद्धः तं पुरुषं '( त्वं ) कः असि वद' इति अभ्यपृच्छत् पृष्टवान् । उपसर्गोऽत्र धात्वर्थानुवर्ती । अथ तस्मै बुद्धाय स भिक्षुवेषः पुरुषः शशंस कथितवान् । कथनमाह । नरपुङ्गवेति । हे नरपुङ्गव नरश्रेष्ठ । 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ।' इत्यमरः । जन्ममृत्युभीतः जन्मनश्च मृत्योश्च भीतो भयं प्राप्तः अत एव च मोक्षहेतोः मोक्षस्य जन्ममृत्युभ्यां मोक्षस्य हेतोः प्रव्रजितः कृतसंन्यासः श्रमणो बौद्धभिक्षुः अस्मि । 'श्रमणो यतिभेदेऽपि' इति विश्वः ।

( १८ ) आत्मनः स्वरूपमाह । जगतीति । अजनः नास्ति जनः संबन्धी मनुजो यस्य तथाभूतः । परित्यक्तजनसंसर्ग इत्यर्थः । अन्यजनैः अन्यैर्मनुजैः अतुल्यबुद्धिः तुल्या सदृशी न भवति बुद्धिर्यस्य तथाभूतः । एतदेव विशदयति । विषयेभ्य इति । विषयेभ्यो रूपादिभ्य इन्द्रियग्राह्येभ्यः पदार्थेभ्यः विनिवृत्तरागदोषः विनिवृत्तः परावृत्तः रागः प्रीतिरेव दोषो यस्य तथाभूतः । निवृत्तविषयप्रीतिरित्यर्थः । अनर्थहेतुत्वाद्रागस्य दोषत्वम् । अहं मुमुक्षुः मोक्तुं संसारबन्धनतो मोक्षं प्राप्तुं इच्छुः सन् । जगति क्षयधर्मके क्षयो नाशो धर्मो यस्य तथाभूते सति । विनाशशीले सति

---

[1] स च ।

निवसन्क्वचिदेव वृक्षमूले विजने वायतने गिरौ वने वा ।
विचराम्यपरिग्रहो निराशः परमार्थाय यथोपपन्नभिक्षुः ॥ १९ ॥
इति पश्यत एव राजसूनोरिदमुक्त्वा स नभः समुत्पपात ।
स हि तद्वपुरन्यबुद्धिदर्शी स्मृतये तस्य समेयिवान्दिवौकाः ॥२०॥
गगनं खगवद्गते च तस्मिन्नृवरः संजहृषे विसिष्मिये[1] च ।
उपलभ्य ततश्च धर्मसंज्ञा[2]मभिनिर्याणविधौ मतिं चकार ॥ २१ ॥

---

इत्यर्थः । तत् प्रसिद्धं निर्वाणरूपं शिवं कल्याणस्वरूपं अक्षयं अविनाशि पदं स्थानं मृगये मार्गयामि । यतो विनश्वरं जगत् ततो विरक्तः परित्यक्तजनसंसर्गश्चाहं निर्वाणपदं मृगयामीत्यर्थः ।

( १९ ) निवसन्निति । क्वचित् कस्मिंश्चित् वृक्षमूले एव वा अथवा विजने निर्जने आयतने चैत्ये । 'चैत्यमायतनं तुल्ये' इत्यमरः । गिरौ पर्वते वा अथवा वने निवसन् वसतिं कुर्वन् अपरिग्रहः नास्ति परिग्रहः परिजनो यस्य तथाभूतः । 'परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः ।' इति मेदिनी । निराशः निरिच्छः यथोपपन्नभिक्षुः यथोपपन्नं यथालाभं भिक्षते तथाभूतः । 'सनाशंसभिक्ष' इत्युः । परमार्थाय अर्थ्यते इष्यतेऽसौ अर्थः अभीष्टं वस्तु परमः श्रेष्ठः अर्थो निर्वाणरूपः परमार्थः तस्मै तं संपादयितुमित्यर्थः । विचरामि संचरामि ।

( २० ) इतीति । राजसूनोः राजपुत्रस्य बुद्धस्य पश्यतः सत एव । बुद्धे पश्यति सत्येवेत्यर्थः । 'षष्ठी चानादरे' इति भावलक्षणे षष्ठी । प्रयुज्यते चानादराभावेऽपि सप्तमीव भावलक्षणे षष्ठ्यपि क्वचित्कविभिः । निरङ्कुशा ह्येत इति । स बौद्धभिक्षुः कर्ता इति एवंप्रकारं इदं निर्दिष्टपूर्वं उक्त्वा नभः आकाशं समुत्पपात आकाशे उड्डयनं कृतवानित्यर्थः । उत्पूर्वो हि पततिरूर्ध्वगमने । किमर्थमसौ नभ उत्पपातेत्याह स इति । हि यतः अन्यबुद्धिदर्शी अन्येषां स्वभिन्नानां बुद्धिं मन इति यावत् द्रष्टुं ज्ञातुं शीलं यस्य तथाभूतः । परचित्तज्ञ इत्यर्थः । दिवौकाः दिवं स्वर्गः ओको निवासस्थानं यस्य सः देव इत्यर्थः । तद्वपुः सन् तत् बौद्धभिक्षुरूपं वपुः शरीरं यस्य तथाभूतः सन् तस्य बुद्धस्य स्मृतये स्मरणार्थं जन्ममृत्युमोक्षणे परिव्रज्यैव प्रभवतीति स्मारयितुमित्यर्थः । समेयिवान् उपागतवान् । अतः संपन्ने कार्ये गतवानिति भावः । समाङ्पूर्वादेतेः क्वसुः ।

( २१ ) गगनमिति । च किंच तस्मिन् भिक्षौ खगवत् खे आकाशे गच्छन्ति खगाः पक्षिणस्तद्वत् गगनं आकाशं गते सति नृवरो नरश्रेष्ठो बुद्धः संजहृषे संतोषं प्राप्तवान् । हृष तुष्टौ इत्यतो दैवादिकात्कर्मकर्तरि लिट् । तत एवात्मने पदम् । च किंच विसिष्मिये विस्मयं ( आश्चर्यं ) प्राप्तवान् । विपूर्वः स्मयतिराश्चर्ये । 'विस्मयो-

---

१ विसिस्मिये । २ संज्ञं ।

तत इन्द्रसमो जितेन्द्रियश्च प्रविविक्षुः परमाश्वमारुरोह ।
परिवर्त्यजनं त्ववेक्षमाणस्तत एवाभिमतं वनं न भेजे ॥ २२ ॥
स जरामरणक्षयं चिकीर्षुर्वनवासाय मतिं स्मृतौ निधाय ।
प्रविवेश पुनः पुरं न कामाद्वनभूमेरिव मण्डलं द्विपेन्द्रः ॥ २३ ॥
सुखिता बत निर्वृता च सा स्त्री पतिरीदृक् त्वमिहायताक्ष यस्याः ।
इति तं समुदीक्ष्य राजकन्या प्रविशन्तं पथि साञ्जलिर्जगाद ॥२४॥

---

द्भुतमाश्चर्यम्' इत्यमरः । च किंच । ततः तस्माद्बुद्धभिक्षोः सकाशात् धर्मसंज्ञां धर्मस्य परिव्रज्यारूपस्य संज्ञां संकेतं (सूचनां) उपलभ्य प्राप्य । तेन सूचितं प्रव्रज्यारूपं धर्ममवगत्येत्यर्थः । अभिनिर्याणविधौ अभिनिर्याणस्य मोक्षस्य संबन्धिनि विधौ-क्रियायाम् । मोक्षप्राप्तिसाधनभूते प्रव्रज्यादिकर्मणीत्यर्थः । 'निर्याणं वारणापाङ्गदेशे मोक्षेऽध्वनिर्गमे' इति मेदिनी । मतिं बुद्धिं चकार कृतवान् । प्रव्रज्याग्रहणं मनसि चिन्तितवानित्यर्थः ।

( २२ ) तत इति । ततः तदनन्तरं इन्द्रसमः इन्द्रस्य समः सदृशः जितेन्द्रियः जितानि वशीकृतानि निगृहीतानीत्यर्थः इन्द्रियाणि येन तथाभूतश्च । स बुद्ध इत्यनुवर्तते । स बुद्धः कर्ता प्रविविक्षुः नगरं प्रवेष्टुमिच्छुः सन् परमाश्वं परमं उत्कृष्टं अश्वं कण्ठकं नाम घोटकं आरुरोह । ननु भो यदि प्रव्रज्यायामनेन मतिर्विहिता तदा किमिति वनमेव न जगाम कुतश्च नगरं प्रवेष्टुमैच्छत् तदाह । तुकारो हेतौ यत इत्यर्थः । परिवर्त्यजनं परिवर्त्यः परिवर्तयितुं निवर्तयितुं योग्यो यो जनो लोकः आनुयात्रिकजन इत्यर्थः तं अवेक्षमाणः पश्यन् आसीत् तत एव तस्मादेव अभिमतं इष्टमपि वनं न भेजे न सेवितवान् न गतवानित्यर्थः । यद्यप्यभीष्टं वनगमनं तथापि प्रतिगमनीयं जनं समीपे पश्यन्न तत्प्राविक्षत् किन्तु तस्य प्रतिप्रेरणाय पुरप्रवेशमेव कामयांचक्र इति भावः

( २३ ) स इति । जरामरणक्षयं जराया मरणस्य च क्षयं नाशं चिकीर्षुः कर्तुमिच्छुः मोक्षं प्राप्तुमिच्छुरित्यर्थः स बुद्धः वनवासाय वनवासं कर्तुं मतिं निश्चयम् । वनवासविषयकं निश्चयमित्यर्थः । स्मृतौ निधाय स्थापयित्वा स्मरन्नित्यर्थः । पुनः पुनरपि पुरं नगरं प्रविवेश । कामात् विषयात् हेतोः विषयानुपभोक्तुमित्यर्थः । न प्रविवेश । कः कस्मादिवेत्याह । द्विपेन्द्रः करिश्रेष्ठः वनभूमेः अरण्यप्रदेशात् मण्डलं राष्ट्रमिव । यथा वन्यः करिश्रेष्ठः पुनर्वनप्रवेशमविस्मरन्नेव कदाचिद्राष्ट्रं प्रविशत्येवं वनप्रवेशमविस्मरन्नेव बुद्धो वनभूमेः सकाशान्निर्गत्य नगरं प्रविवेश नैव पुनर्नगर एवात्यन्तं निवस्तुमिति भावः । उपमालङ्कारः ।

(२४) सुखितेति । प्रविशन्तं नगरे विशन्तं तं बुद्धं समुदीक्ष्य दृष्ट्वा पथि मार्गे राजकन्या राज्ञः पुत्री साञ्जलिः अञ्जलिना सह वर्तमाना सती । बद्धाञ्जलिः सतीत्यर्थः । बतेति हर्षे । हे आयताक्ष आयते दीर्घे अक्षिणी नेत्रे यस्य तथा-

अथ घोषमिमं महाभ्रघोषः परिशुश्राव शमं परं च लेभे।
श्रुतवानपि[1] निर्वृतेतिशब्दं परिनिर्वाणविधौ मतिं चकार॥ २५॥
अथ काञ्चनशैलशृङ्गवर्ष्मा गजमेघर्षभबाहुनिःस्वनाक्षः।
क्षयं[2]मक्षयधर्मजातरागः शशिसिंहाननविक्रमः प्रपेदे॥ २६॥

भूत बुद्ध। 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच्। ईदृक् एवंविधः त्वं यस्याः पतिः भर्ता सा स्त्री सुखिता सुखं संजातमस्यां तथाभूता। सुखविशिष्टेत्यर्थः। च किंच निर्वृता सुस्थितिमती इति जगाद उक्तवती। गद व्यक्तायां वाचीत्यतो लिट्। 'निर्वृतिः सुस्थितावस्तंगमनेऽपि सुखे स्त्रियाम्।' इति मेदिनी।

(२५) अथेति। अथ राजकन्याया वचनानन्तरं महाभ्रघोषः महतः अभ्रस्य मेघस्य घोष इव घोषो ध्वनिर्यस्य तथाभूतः। मेघगम्भीरध्वनिर्बुद्ध इत्यर्थः। इमं राजकन्ययोदीरितं घोषं शब्दं परिशुश्राव श्रुतवान्। परिरत्र धात्वर्थानुवर्ती। सम्यक्श्रुतवानिति वा। एवं च धात्वर्थविशेषणे परिः। त्रिविधा ह्युपसर्गाः। तदाहुः 'धात्वर्थं बाधते कश्चित्कश्चित्तमनुवर्तते। तमेव विशिनष्ट्यन्य उपसर्गगतिस्त्रिधा।' इति। च किंच परं आत्यन्तिकं शमं शान्तिं लेभे लब्धवान्। अपि किंच 'निर्वृता' इतिशब्दं राजकन्याया वचने वर्तमानं श्रुतवान् सन्। निर्पूर्वकस्य वृणोतेः श्रवणेन निर्वाणस्य स्मृतावारूढत्वादिति भावः। परिनिर्वाणविधौ परिनिर्वाणस्य मोक्षस्य संबन्धी यो विधिर्विधानं तत्र विषये मतिं मनः चकार प्रवर्तितवानित्यर्थः। मोक्षसाधने मनः प्रवर्तयामासेत्यर्थः।

(२६) अथेति। अथ अनन्तरं काञ्चनशैलशृङ्गवर्ष्मा काञ्चनस्य सुवर्णस्य शैलः पर्वतः सुमेरुः तस्य शृङ्गं शिखरमिव गौरं स्थूलमुन्नतं च वर्ष्म शरीरं यस्य तथाभूतः। 'शरीरं वर्ष्म विग्रहः।' इत्यमरः। गजमेघर्षभबाहुनिःस्वनाक्षः बाहू च निःस्वनो ध्वनिश्च अक्षिणी नेत्रे च बाहुनिःस्वनाक्षीणि गजश्च मेघश्च ऋषभो वृषभश्च गजमेघर्षभाः तद्वत् बाहुनिःस्वनाक्षीणि यस्य तथाभूतः। यथासंख्यमेतद्योज्यम्। गजशुण्डावद्बाहू मेघवन्निःस्वनो वृषभवच्चाक्षिणी यस्येति। बाहुपदस्य पुनः शुण्डापरत्वं मृग्यम्। शशिसिंहाननविक्रमः शशी चन्द्रश्च सिंहश्च तद्वत् आननं च विक्रमः पराक्रमश्च तस्य तादृशः। चन्द्रतुल्यमुखः सिंहसदृशपराक्रमश्चेत्यर्थः। अत्रापि यथासंख्यम्। अक्षयधर्मजातरागः अक्षयः अविनाशो मोक्ष इत्यर्थः स एव धर्मः तत्र जातरागः समुत्पन्नप्रीतिः स बुद्ध इति शेषः। क्षयं गृहं प्रपेदे प्राप्तवान्। पद्यतेर्लिट्। 'धिष्ण्यं धाम निकेतनं च सदनं पस्त्यं च वास्तु क्षयः।' इति हलायुधः। 'ऋषभो वृषभो वृषः' इत्यमरः।

१ श्रुतवांश्च हि। २ गृह।

मृगराजगतिस्ततोऽभ्यगच्छन्नृपतिं मन्त्रिगणैरुपास्यमानम्।
समितौ मरुतामिव ज्वलन्तं मघवन्तं त्रिदिवे सनत्कुमारः॥ २७ ॥

प्रणिपत्य च साञ्जलिर्बभाषे दिश मह्यं नरदेव साध्वनुज्ञाम्।
परिविव्रजिषामि मोक्षहेतोर्नियतो ह्यस्य जनस्य विप्रयोगः ॥२८॥

इति तस्य वचो निशम्य राजा करिणेवाभिहतो द्रुमश्चचाल।
कमलप्रतिमेऽञ्जलौ गृहीत्वा वचनं चेदमुवाच बाष्पकण्ठः ॥ २९ ॥

---

( २७ ) मृगराजेति । ततः मन्दिरागमनानन्तरं त्रिदिवे स्वर्गे। 'त्रिदिवत्रिदशालयाः' इति स्वर्गपर्यायेष्वमरः। मरुतां देवानां समितौ सभायां ज्वलन्तं भ्राजमानं मघवन्तं इन्द्रं सनत्कुमारो देवर्षिविशेष इव मृगराजगतिः मृगराजस्य सिंहस्य गतिरिव गतिर्गमनं यस्य स बुद्धः कर्ता समितौ सभायां मन्त्रिगणैः मन्त्रिणां समूहैः उपास्यमानं सेव्यमानं नृपतिं राजानं शुद्धोदनं अभ्यगच्छत् उपजगाम। 'मरुद्देवे समीरे ना' इति मेदिनी। 'सभासमितिसंसदः' इत्यमरः। सनत् सदा कुमारः सनत्कुमारः। तदुक्तं हरिवंशे 'यथोत्पन्नस्तथैवाहं कुमार इति विद्धिमाम्। तस्मात्सनत्कुमारेति नामैतन्मे प्रतिष्ठितम्।' इति।

( २८ ) प्रणिपत्येति । च किंच प्रणिपत्य नमस्कृत्य राजानमित्यर्थात् साञ्जलिः बद्धाञ्जलिः सन् बभाषे उक्तवान्। बुद्ध इति कर्तृपदमत्र ग्राह्यम्। भाषणमाह। हे नरदेव नरश्चासौ देवश्च नरदेवः नररूपेण वर्तमानो देवः राजा तत्संबुद्धौ हे नरदेव राजन्। 'बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः। महती देवता ह्येषा नररूपेण तिष्ठति।' इति मनुः। साधु यथा तथा मह्यं अनुज्ञां अनुमतिं देहि। साध्वनुज्ञामिति समस्तं वा पदम्। साध्वीमनुज्ञामित्यर्थः। कस्मिन्विषयेऽनुज्ञेत्याह परीति। मोक्षहेतोः मोक्षार्थं परिविव्रजिषामि परिव्रजितुमिच्छामि। संन्यासं कर्तुमिच्छामीत्यर्थः। परिपूर्वाद्व्रजतेः संन्यसनार्थकात्सन्। ननु भो एवं ते चिरं वियोगः स्यात्तत्कथमनुज्ञां दद्यामितिचेत्तत्राह नियत इति। हि यस्मात् अस्य मद्रूपस्य जनस्य विप्रयोगः वियोगः नियतः अवश्यंभावी । मरणधर्मत्वादिति भावः । तद्यदा कदाप्यवश्यं भाविनि वियोगे नास्ति भीतेः प्रयोजनमिति भावः।

( २९ ) इतीति। राजा शुद्धोदनः इति एवंप्रकारं तस्य बुद्धस्य वचः भाषितं निशम्य श्रुत्वा करिणा गजेन अभिहतः कृताघातः द्रुमो वृक्ष इव चचाल चलितः। नष्टधैर्यो बभूवेत्यर्थः। च अपि च कमलप्रतिमे कमलं प्रतिमा उपमानं यस्य तथाभूते कमलसदृश इत्यर्थः अञ्जलौ संपुटिते हस्तद्वये गृहीत्वा तं धृत्वा बाष्पकण्ठः बाष्पं कण्ठे यस्य तथाभूतः दुःखातिशयवशाद्बाष्पनिरुद्धकण्ठ इत्यर्थः। इदं वक्ष्यमाणं वचनं वाक्यं उवाच उक्तवान्।

प्रतिसंहर तात बुद्धिमेतां न हि कालस्तव धर्मसंश्रयस्य ।
वयसि प्रथमे मतौ चलायां बहुदोषां हि वदन्ति धर्मचर्याम् ॥३०॥
विषये[1] सकुतूहलेन्द्रियस्य व्रतखेदेष्वसमर्थनिश्चयस्य ।
तरुणस्य मनश्चलत्यरण्यादनभिज्ञस्य विशेषतो विवेके[2] ॥ ३१ ॥
मम तु प्रियधर्म धर्मकालस्त्वयि लक्ष्मीमवसृज्य लक्ष्यभूते ।
स्थिरविक्रम विक्रमेण धर्मस्तव हित्वा तु गुरुं भवेदधर्मः ॥ ३२ ॥

(३०) वचनमाह **प्रतिसंहरेति** । तात वत्स ! 'वत्स पुत्रक तातेति नाम्ना गोत्रेण वा सुतः । शिष्योऽनुजश्च वक्तव्यः' इति विश्वनाथः । एतां त्वया निर्दिश्यमानां परिव्रज्याविषयिणीं बुद्धिं निश्चयं प्रतिसंहर समापय त्यजेत्यर्थः । कुत इत्याह **नेति** । हि यतः संप्रतीति शेषः । तव धर्मसंश्रयस्य धर्मस्य मोक्षरूपस्य संश्रय आश्रयः तस्य संबन्धी कालो योग्यः समयः न नास्ति । कुत एतत्संभाव्यत इत्याह । वयसीति । हि यस्मात् प्रथमे तारुण्यरूपे वयसि मतौ बुद्धौ चलायां अस्थिरायां सत्यां धर्मचर्यां धर्मस्य चर्यामाचरणम् । बहुदोषां बहवो दोषाः प्रत्यवाया यस्यां तथाविधां वदन्ति धर्मज्ञा इति शेषः । यतस्तारुण्ये नियतमेव बुद्धेश्चाञ्चल्यं ततस्तत्र धर्माचरणं प्रमादानामवश्यंभावित्वाद्दोषानेवापातयेदिति नैष धर्माचरणोचितः समय इति भावः । चर्येति 'गदमदचरयमश्चानुपसर्गे' इति यत् । ततः स्त्रियां टाप् ।

(३१) उक्तमेवार्थं द्रढयति **विषय** इति । विषये । जातावेकवचनम् । विषयेष्वित्यर्थः । विषयेषु रूपादिषु विषये सकुतूहलेन्द्रियस्य सकुतूहलानि कुतूहलेन लोलतया (बलवताभिलाषेण) सहितानि इन्द्रियाणि यस्य तथाभूतस्य । 'रम्यवस्तु समालोके लोलता स्यात्कुतूहलम् ।' इति दर्पणम् । व्रतखेदेषु व्रतैश्चान्द्रायणादिभिः खेदाः श्रमाः तेषु विषये तत्सहनविषय इत्यर्थः । असमर्थनिश्चयस्य असमर्थः दुर्बलः निश्चयो बुद्धिवृत्तिर्यस्य तथाभूतस्य । मनसा क्लेशान्सोढुमशक्तस्येत्यर्थः । तरुणस्य तत्र च विशेषतः विवेके परमात्मविषयके विचारे अनभिज्ञस्य अज्ञस्य मनः अरण्यात् अरण्यवासादित्यर्थः चलति प्रतिनिवर्तत इति यावत् । अतस्तरुणेन वनवासे न प्रयतितव्यमिति भावः ।

(३२) अहमेव तु वनं गत्वा धर्मचर्यामर्हामीत्याह **ममेति** । तु किन्तु हे प्रियधर्म प्रियो धर्मो यस्य तथाभूत । 'धर्मादनिच् केवलादि' त्यनिच् तु न भवति समासान्तविधेरनित्यत्वात् । मम, लक्ष्यभूते संपदो विषयभूते संपदर्पणयोग्य इत्यर्थः त्वयि लक्ष्मीं राज्यसंपदं अवसृज्य त्यक्त्वा समर्प्येत्यर्थः धर्मकालः धर्मस्य धर्माचरणस्य कालः योग्यः समयः अस्ति । धर्मपदस्य धर्माचरणार्थकत्वादेव क्त्वः समान-

१ विषयेषु । २ विवेकम् ।

**तदिमं व्यवसायमुत्सृज त्वं भव तावन्निरतो गृहस्थधर्मे ।**
**पुरुषस्य वयःसुखानि भुक्त्वा रमणीयो हि तपोवनप्रवेशः ॥३३॥**
**इति वाक्यमिदं निशम्य राज्ञः कलविङ्कस्वर उत्तरं बभाषे ।**
**यदि मे प्रतिभूश्चतुर्षु राजन् भवसि त्वं न तपोवनं श्रयिष्ये ॥३४॥**
**न भवेन्मरणाय जीवितं मे विहरेत्स्वास्थ्यमिदं च मे न रोगः ।**
**न च यौवनमाक्षिपेज्जरा मे न च संपत्तिमपाहरेद्विपत्तिः ॥ ३५ ॥**

---

कर्तृकत्वं न व्यभिचरति । अतोऽहमेव धर्मं चरिष्यामीति भावः । तत्किंवा मया कर्तव्यमिति चेत्तत्राह स्थिरेति । हे स्थिरविक्रम स्थिरः अचलः अविनाशीत्यर्थः विक्रमः पराक्रमो यस्य तथाभूत वत्स । तव विक्रमेण पराक्रमेण करणभूतेन धर्मः पुण्यं भवेत् गुरुं पितरं मां हित्वा त्यक्त्वा तु मां त्यक्त्वा वनगमनेनेत्यर्थः । अधर्मः पापं भवेत् । पितृपरित्यागस्याधर्मत्वादिति भावः । 'धर्माः पुण्ययमन्याये' त्यमरः ।

( ३३ ) उपसंहरति । तदिति । तत् तस्मात् त्वं इमं व्यवसायं विशिष्टं निश्चयं उत्सृज त्यज । 'अथावसायः शेषे स्यात्समाप्तौ निश्चयेऽपि च ।' इति मेदिनी । तावत्साकल्येन गृहस्थधर्मे गृहस्थाश्रमिणो धर्मे निरतः आसक्तः भव । 'यावत्तावच्च साकल्ये' इत्यमरः । हि यस्मात् पुरुषस्य वयःसुखानि वयसः तारुण्यस्य संबन्धीनि सुखानि विषयसुखानीत्यर्थः । भुक्त्वा उपभुज्य ततः परमित्यर्थः । तपोवनप्रवेशः तपोवने गमनं रमणीयः शोभनः । न पुनरभुक्त्वा विषयसुखानीति भावः ।

( ३४ ) इतीति । इति एवंप्रकारं राज्ञः इदं वाक्यं वचनं निशम्य श्रुत्वा कलविङ्कस्वरः कलविङ्कस्य चटकस्येव स्वरो यस्य स बुद्धः उत्तरं बभाषे उक्तवान् । तदेवाह यदीति । हे राजन् यदि त्वं मे चतुर्षु अर्थेषु वक्ष्यमाणेषु विषये प्रतिभूः लग्नकः ( जबाबदार जामीन इति ख्यातः ) भवसि तदेति शेषः । वनं न श्रयिष्ये नाश्रयिष्यामि । 'स्युर्लग्नकाः प्रतिभुवः' इत्यमरः । 'चटकः कलविङ्कः स्यादि'ति च । चटकश्च चिमणीति महाराष्ट्र्यां ख्यातः पक्षिविशेषः ।

( ३५ ) येषु चतुर्षु प्रतिभूत्वमपेक्ष्यते तानाह **नेति** । मे जीवितं जीवनं मरणाय मृत्युं प्रदातुं न भवेत् । जीवितं मृत्युप्रदं न स्यादित्यर्थः । च किंच रोगः कर्ता एकोऽपीत्येकवचनेन द्योत्यते । मे मम इदं संप्रत्यनुभूयमानं स्वास्थ्यं स्वस्थत्वं सुखित्वमित्यर्थः न विहरेत् न अपहरेत् न नाशयेदित्यर्थः । विपूर्वको हरतिर्विहारार्थकोऽपि कविनाऽत्र निरङ्कुशत्वादपहारार्थे प्रयुक्तः । च किंच जरा वृद्धत्वं मे यौवनं तारुण्यं न आक्षिपेत् न हरेत् न विनाशयेदित्यर्थः । च किंच विपत्तिः विपत् कर्त्री संपत्तिं संपदं न अपाहरेत् न विनाशयेदित्यर्थः । इत्येतेष्वर्थेषु चेद्भवान्प्रतिभूः स्यात्तर्हि नाहं वनं गमिष्यामीति भावः ।

इति दुर्घटमर्थमूचिवांसं तनयं वाक्यमुवाच शाक्यराजः ।
त्यज बुद्धिमिमां गतिप्रवृत्तामवहास्योऽतिमनोरथक्रमश्च ॥ ३६ ॥
अथ मेरुगुरुर्गुरुं बभाषे यदि नास्ति क्रम एष नास्मि[2] वार्यः ।
शरणाज्ज्वलनेन दह्यमानान्न हि निश्चिक्रमिषुं क्षमं निरोद्धुम्[3] ३७
जगतश्च यथा ध्रुवं वियोगो ननु[4] धर्माय वरं ततो[5] वियोगः ।
अवशं ननु विप्रयोजयेन्मामकृतस्वार्थमतृप्तमेव मृत्युः ॥ ३८ ॥

( ३६ ) इतीति । शाक्यराजः शुद्धोदनः कर्ता इति एवंप्रकारं दुर्घटं दुःखेन घटितुं शक्यम् । 'ईषद्दुःसुषि' त्यादिना खल् । अशक्यसंघटनमित्यर्थः । अर्थं ऊचिवांसं उक्तवन्तम् । वचेर्लिटः क्वसुः । तनयं पुत्रं वाक्यं उवाच उक्तवान् । ब्रुवो द्विकर्मकत्वात्तनयवाक्ययोः कर्मत्वम् । वाक्यमाह **त्यजेति** । गतिप्रवृत्तां गतौ ज्ञाने मोक्ष इत्यर्थः । प्रवृत्तां जातप्रवृत्तिं इमां बुद्धिं त्यज । 'गतिः स्त्री मार्गदशयोर्ज्ञाने' इति मेदिनी । चकारो हेत्वर्थः । निपातानामनेकार्थत्वात् । च यस्मात् अतिमनोरथक्रमः मनोरथं अतिक्रान्तः अतिमनोरथः मनोरथातिगामी अर्थः तत्र क्रमः प्रवृत्तिः अवहास्यः अवहसितुं अपहसितुं योग्यो भवतीति शेषः । अतिमनोरथ इत्यत्रात्यादयः क्रान्ताद्यर्थे द्वितीययेति समासः । मोक्षरूपश्चार्थोऽतिमनोरथ इति तत्र प्रवृत्तिर्हास्यायैव स्यान्नैव पुनः श्रेयस इति भावः ।

( ३७ ) अथेति । अथ शुद्धोदनवचनानन्तरं मेरुगुरुः मेरुः पर्वतविशेष इव गुरुर्महान् बुद्धः गुरुं पितरं बभाषे भाषितवान् । भाषणमाह **यदीति** । यदि क्रमः उक्तार्थेषु प्रतिभूभवने शक्तिः नास्ति तर्हीति शेषः । एषः स्वाभीष्टे वर्त्मनि प्रवृत्तः अस्मि अहं न वार्यः न निवारणीयः । कुत इत्याह शरणादिति । ज्वलनेन अग्निना दह्यमानात् दाहविषयीक्रियमाणात् शरणात् गृहात् निश्चिक्रमिषुं निष्क्रमितुमिच्छुम् । निर्पूर्वात्क्रमेः सनि सनाशंसेत्यादिना उः । बहिर्गन्तुमिच्छन्तं पुरुषमित्यर्थः । निरोद्धुं गृह एव निरुद्धं कर्तुं न क्षमं न योग्यम् । निरोद्धुमिति 'शकधृषेत्या'दिना अर्हार्थे तुमुन् । 'क्रमश्चानुक्रमे शक्तौ' इति मेदिनी । 'शरणं गृहरक्षित्रोः' इत्यमरः ।

( ३८ ) सत्यमिदं तथापि वियोगभीरुतैव मां प्रतिबध्नातीति चेत्तत्राह **जगत** इति । च किंच यथा यस्मात्कारणात् जगतः वियोगः ध्रुवं निश्चितः । ध्रुवमिति सामान्ये नपुंसकम् । भावीत्यध्याहृतायाः क्रियाया वा विशेषणमेतत् ध्रुवं यथा तथा भावीत्यर्थः । ततः तस्मात् ननु हे राजन् धर्माय धर्मार्थं धर्माचरणार्थं पुण्यसंपादनार्थं वा वियोगः वरं मनाक् प्रियः ज्यायानिति यावत् । 'मनागिष्टे वरं क्लीबे' इति मेदिनी । ननु यतः अवशं अस्वतन्त्रं जीवितस्य स्वाधीनत्वाभावादिति भावः । अकृतस्वार्थं न कृतः संपादितः स्वस्य अर्थः अभीष्टं कार्यं येन तथाभूतं तत एव च अतृप्तं तृप्तिशून्यं

१ दुर्लभ । २ नास्ति । ३ ग्रहीतुम् । ४ न तु । ५ त्वयं ।

इति भूमिपतिर्निशम्य तस्य व्यवसायं तनयस्य निर्मुमुक्षोः।
अभिधाय न यास्यतीति भूयो विदधे रक्षणमुत्तमांश्च कामान् ३९
सचिवैश्च निदर्शितो यथावद्बहुमानात्प्रणयाच्च शास्त्रपूर्वम्।
गुरुणा च निवारितोऽश्रुपातैः प्रविवेशावसथं ततः स शोचन्॥
चलकुण्डलमण्डिताननाभिर्घननिःश्वासविकम्पितस्तनीभिः।
वनिताभिरधीरलोचनाभिर्मृगशावाभिरिवाभ्युदीक्ष्यमाणः॥४१॥
[युग्मकम्]

---

सन्तमेव मां मृत्युः विप्रयोजयेत् वियोजयेत् त्वया सहेति शेषः। 'श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्। न हि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम्' इति ह्याहुः। अकृतार्थस्यातृप्तस्यावशस्य च मृत्युना वियोजनापेक्षया धर्माचरणात्मकस्य श्रेयसः संपादनाय स्वयमेवापातितो वियोगः श्रेयान्। स्वयमनापादितश्चायं न किल नापतिष्यतीत्यनुमोद्यतां मन्मतमिति भावः।

(३९) इतीति। भूमिपतिः राजा शुद्धोदनः कर्ता निर्मुमुक्षोः निर्मोक्तुं मोक्षं प्राप्तुं इच्छोः। निर्पूर्वान्मुञ्चतेः सन्नन्तादुः। तस्य तनयस्य पुत्रस्य बुद्धस्य इति एवंप्रकारं व्यवसायं निश्चयं निश्चयात्मकं वचनमित्यर्थः। निशम्य श्रुत्वा एष तनय इति शेषः। अभिधाय गच्छामीति कथयित्वा न यास्यति न गमिष्यति। अहं गमनमस्य नानुमन्य इत्यनिवेद्यैव मां गमिष्यतीति भावः। इति हेतोः भूयः पुनरपि रक्षणं विदधे चकार यामिकाद्यवस्थापनपूर्वकं पुत्रस्य पालनं विदधे च उत्तमान् अतिशयेनोत्कृष्टान् कामान् स्त्रीभृतीन्विषयांश्च विदधे पुत्रस्य मनस आवर्जनाय योजितवानित्यर्थः। क्रियासामान्यवाचिनोपि विदधातेः क्रियाविशेषार्थकतोपसंहारन्यायात्।

(४०) सचिवैरिति। च किंच सचिवैः मन्त्रिभिः बहुमानात् आदरेण प्रणयात्प्रेम्णा च शास्त्रपूर्वं शास्त्रं पूर्वं प्रथमं यस्मिन्कर्मणि तद्यथा तथा। प्रथमं शास्त्रवचनान्युदाहृत्येत्यर्थः। यथावत् योग्यप्रकारेण निदर्शितः दृष्टान्तप्रदर्शनेन बोधितः। निपूर्वाद्दृशेर्णिजन्ताद्दृष्टान्तप्रदर्शनार्थकान्निष्ठा। च किंच गुरुणा पित्रा अश्रुपातैः अश्रूणां शोकजन्यानां बाष्पाणां पातैः पातनैः करणभूतैः। अश्रूणि विमुच्येत्यर्थः। नेवारितः कृतनिवारणः स बुद्धः शोचन् शोकं कुर्वन्सन् आवसथं गृहं प्रविष्टवान्। 'आवासावसथं गृहं च भवनं' इति हलायुधः।

(४१) बुद्धं विशिनष्टि चलेति। चलकुण्डलमण्डिताननाभिः चलैश्चञ्चलैः कुण्डलैः मण्डितानि विभूषितानि आननानि मुखानि यासां ताभिः। घननिश्वासविकम्पितस्तनीभिः घनेन सान्द्रेण निःश्वासेन अन्तःकामतापातिशयसूचिकया निःश्वनक्रियया कम्पिताः कम्पं प्राप्ताः स्तना यासां तथाभूताभिः। 'स्वाङ्गाच्चोपसर्जनादसं-

स हि काञ्चनपर्वतावदातो हृदयोन्मादकरो वराङ्गनानाम् ।
श्रवणाङ्गविलोचनात्मभावान्वचनस्पर्शवपुर्गुणैर्जहार ॥ ४२ ॥
विगते दिवसे ततो विमानं वपुषा सूर्य इव प्रदीप्यमानः ।
तिमिरं विजिघांसुरात्मभासा रविरुद्यन्निव मेरुमारुरोह ॥ ४३ ॥
कनकोज्ज्वलदीप्तदीपवृक्षं वरकालागुरुधूपपूर्णगर्भम् ।
अधिरुह्य स वज्रभक्तिचित्रं प्रवरं काञ्चनमासनं सिषेवे ॥ ४४ ॥

---

योगोपधात्' इति ङीष् । अधीरलोचनाभिः अधीराणि भीतानि भीतिसूचकानि चपलानीत्यर्थः लोचनानि नेत्राणि यासां तथाभूताभिः । अधीराणां भीरूणां लोचनानीव लोचनानि नेत्राणि यासां तथाभूताभिरिति वा विग्रहः । 'अधीरे कातरत्रस्तभीरुभीलुकभीरुकाः ।' इत्यमरः । मृगशावाभिरिव मृगाणां हारिणानां शावाभिर्बालिकाभिरिव वनिताभिः स्त्रीभिः अभ्युदीक्ष्यमाणः अभितो दृश्यमानः स प्रविवेशेति पूर्वेण संबन्धः ।

(४२) किमिति ताभिरयमुदीक्षित इत्याह स इति । हि यस्मात् काञ्चनपर्वतावदातः काञ्चनस्य सुवर्णस्य पर्वतो मेरुरिव अवदातो गौरः । 'अवदातः सिते गौरे' इति मेदिनी । वराङ्गनानां उत्तमस्त्रीणां हृदयस्योन्मादस्य करः कारकः । करोतेः पचाद्यच् । वपुःसौभाग्येन स्त्रीणां हृदयस्योन्मादजनक इत्यर्थः । वचनस्पर्शवपुर्गुणैः वचनं भाषितं च स्पर्शश्च वपुः स्वरूपं च गुणाः शमादयश्च तैः करणभूतैः तासामिति शेषः श्रवणाङ्गविलोचनात्मभावान् श्रवणं श्रोत्रं च अङ्गं शरीरं च विलोचनं नेत्रं च आत्मभावो हृदयाशयश्च तान् । वचनेन श्रवणं स्पर्शेनाङ्गं वपुषा विलोचनं गुणैश्चात्मभावमिति यथाक्रमं सम्बन्धः । जहार हृतवान् आत्मैकप्रवणांश्चकारेत्यर्थः । अत एव च ताभिरुदीक्ष्यमाण इति भावः ।

(४३) विगत इति । ततः तदनन्तरं दिवसे विगते नष्टे सति सूर्य इव वपुषा शरीरेण प्रदीप्यमानः प्रकाशमानः तत एव च आत्मभासा आत्मनः प्रभया तिमिरं तमः विजिघांसुः विहन्तुं विनाशयितुमिच्छुः उद्यन् उदयं प्राप्नुवन् रविः सूर्यो मेरुं पर्वतविशेषमिव विमानं राजमन्दिरं आरुरोह आरूढवान् । 'विमानो व्योमयाने च सार्वभौमगृहेऽपि च ।' इति मेदिनी । बुद्धपक्षे आत्मनः स्वस्य साक्षात्कृतस्य वा परमात्मनः भासा तेजसा तिमिरं तमःसदृशं पातकमिति वा योज्यम् । उपमालङ्कारः ।

(४४) कनकेति । स बुद्धः कनकोज्ज्वलदीप्तरत्नवृक्षं कनकस्य सुवर्णस्य उज्ज्वला दीप्तिमन्तो दीप्ताः प्रज्वलिताश्च दीपवृक्षा वृक्षसदृशानि दीपाधानपात्राणि 'समई' इति महाराष्ट्र्यां ख्यातानि यस्मिंस्तथाभूतम् । दीप्तेत्यत्र दीप्रेत्यपि क्वचित्पाठः । तत्र दीपनशीलाः स्वयमेव प्रकाशमाना इत्यर्थः । 'शिखातरुर्दीपवृक्षो ज्योत्स्नावृक्षोऽथ लोचकः ।' इति त्रिकाण्डशेषः । वरकालागुरुधूपपूर्णगर्भम् वरस्य श्रेष्ठस्य कालागुरोः कृष्णचन्दनस्य धूपेन पूर्णो गर्भः अन्तर्भागो यस्य तं विमानं अधिरुह्य आरुह्य वज्रभक्तिचित्रं वज्राणां हीरकसंज्ञकानां रत्नानां भक्तिभिः रचना-

तत उत्तममुत्तमाश्च नार्यो निशि तूर्यैरुपतस्थुरिन्द्रकल्पम् ।
हिमवच्छिरसीव चन्द्रगौरे द्रविणेन्द्रात्मजमप्सरोवरौघाः ॥ ४५ ॥
परमैरपि दिव्यतूर्यकल्पैः स तु तैर्नैव रतिं ययौ न हर्षम् ॥
परमार्थसुखाय तस्य साधोरभिनिश्चिक्रमिषा यतो विरेजे ॥४६॥
अथ तत्र सुरैस्तपोवरिष्ठैरकनिष्ठैर्व्यवसायमस्य बुद्ध्वा ।
युगपत्प्रमदाजनस्य निद्रा विहिताऽसीद्विकृताश्च गात्रचेष्टाः ॥४७॥

भिर्लैस्वाभिरिति यावत् । चित्रं चित्रवर्णम् । 'हीरकं भिदुरं वज्रम्' इति राजनिर्घण्टः । प्रवरं अत्युत्कृष्टं काञ्चनं सुवर्णमयम् । 'काञ्चनशब्दात् 'जातरूपेभ्यः परिमाणे' इत्यण् । परिमाणं विकारः । आसनं सिषेवे सेवितवान् । आसन उपविष्टवानित्यर्थः । 'भक्तिर्निषेवणे भागे रचनाया' मिति शब्दार्णवः ।

(४५) तत इति । च किंच इन्द्रकल्पं इन्द्रादीषन्न्यूनं इन्द्रवच्छोभमानमित्यर्थः । 'ईषदसमाप्ता' वित्यादिना कल्पप् । उत्तमं अत्युत्कृष्टं तं बुद्धं निशि रात्रौ ततः तस्मिन् मन्दिरे । 'आद्यादिभ्य उपसंख्यान'मिति सार्वविभक्तिकोऽत्र सप्तम्यर्थे तसिः । अन्यथा बिम्बानुबिम्बभावानुपपत्तेः । उत्तमा उत्कृष्टा नार्यः स्त्रियः कर्त्र्यः चन्द्रगौरे चन्द्रवच्छुभ्रे । 'अवदातः सितो गौर'इति श्वेतपर्यायेष्वमरः । हिमवच्छिरसि हिमवतो हिमाचलस्य शिरसि शिखरे 'शिरोऽग्रं शिखर'मित्यमरः । द्रविणेन्द्रात्मजं द्रविणस्य धनस्य इन्द्रः अधिपतिः कुबेरः तस्य आत्मजं पुत्रं नलकूवराख्यं अप्सरोवरौघाः अप्सरःसु स्वर्वेश्यासु वराः श्रेष्ठाः तासामोघाः समूहा इव तूर्यैः वाद्यैः उपलक्षिताः । उपलक्षणे तृतीया । उपतस्थुः उपगतवत्यः । 'राजराजो धनाधिपः' इति कुबेरपर्यायेष्वमरः । न पुत्ररत्र पूर्वपदं परिवृत्तिसहं दृष्टम् । निरङ्कुशाः कवयः । बिम्बानुबिम्बभावेनोपमा ।

(४६) परमैरिति । तु किन्तु स बुद्धः दिव्यतूर्यकल्पैः दिवि भवानि दिव्यानि स्वर्गवर्तीनि यानि तूर्याणि वाद्यानि तत्सदृशैरित्यर्थः । पूर्ववत्कल्पप् । परमैः उत्कृष्टैरपि तैर्वाद्यैः रतिं रागं (प्रेम) न ययौ न प्राप । 'रतिः स्त्री स्मरदारेषु रागे' इति मेदिनी । हर्षं आनन्दं च न ययौ । कुत एतदित्याह परमेति । यतः यस्मात् तस्य साधोः बुद्धस्य परमार्थसुखाय परमः श्रेष्ठोऽर्थः पुरुषार्थो मोक्षस्तस्य संन्बधि यत्सुखं तस्मै । परमार्थाय पारमार्थिकाय वा सुखाय मोक्षरूपायेत्यर्थः । निश्चिक्रमिषा निष्क्रमितुं निर्गन्तुमिच्छा विरेजे विराजमाना आसीत् । फणादित्वादेत्वाभ्यासलोपौ ततो रतिं हर्षं च न ययाविति भावः । न रेमे इत्यपि पाठः । तत्र रमिर्विरामार्थको द्रष्टव्यः । निरुपसर्गाणामपि सोपसर्गवदर्थप्रतीतेः ।

(४७) अथेति । अथ अनन्तरं तपोवरिष्ठैः तपसा अतिशयेन श्रेष्ठैः वरशब्दादतिशायन इष्ठन् । 'तपो द्वन्द्वसहनं, द्वन्द्वाश्च जिघत्सापिपासे शीतोष्णे स्थानासने काष्ठमौनाकारमौने च व्रतानि चैव यथायोगं कृच्छ्रचान्द्रायणसान्तपनादीनि' इति योग-

१ गणौघाः । २ न रेमे । ३ विरताश्च ।

अभवच्छयिताऽथ तत्र काचिद्विनिवेश्य प्रचले करे कपोलम् ।
दयितामपि रुक्मपत्रचित्रां कुपितेवाङ्कगतां विहाय वीणाम् ॥ ४८ ॥
विबभौ करलग्नवेणुरन्या स्तनविस्रस्तसितांशुका शयाना ।
ऋजुषट्पदपङ्क्तिजुष्टपद्मा जलफेनप्रहसत्तटा नदीव ॥ ४९ ॥
नवपुष्करगर्भकोमलाभ्यां तपनीयोज्ज्वलसंगताङ्गदाभ्याम् ।
स्वपिति स्म तथाऽपरा भुजाभ्यां परिरभ्य प्रियवन्मृदङ्गमेव ॥ ५० ॥

भाष्ये व्यासपादाः । **अकनिष्ठैः** निकृष्टेतरैः सुरैर्देवैः कर्तृभूतैः अस्य बुद्धस्य व्यवसायं निश्चयं बुद्ध्वा ज्ञात्वा युगपत् सपदि प्रमदाजनस्य नारीणां समूहस्य निद्रा विहिता कृता जनितेत्यर्थः आसीत् । 'प्रमदा मानिनी कान्ते' ति स्त्रीविशेषनिर्देशेऽमरः। सर्वा अपि सपदि निद्रां प्रापिता इत्यर्थः । च किंच विकृता बीभत्सा गात्रचेष्टाः गात्राणामवयवानां चेष्टा व्यापाराः विहिता इति विपरिणामेन संबध्यते । 'विकृतं त्रिषु बीभत्से' इति मेदिनी 'क्लीबमङ्गे कलेवरे' इति च गात्रशब्दार्थेषु स एव । निर्गमनप्रतिबन्धनिवारणार्थं वैराग्यातिशयसंजननार्थं चैतदनुष्ठानम् ।

( ४८ ) अथासां स्वापं च गात्रचेष्टाश्चोपवर्णयति पञ्चदशभिः । **अभवदिति**। अथ तत्र तस्मिन्मन्दिरे काचित् स्त्री रुक्मपत्रचित्रां रुक्मस्य सुवर्णस्य पत्रैः चित्रां चित्रवर्णतां प्राप्तां अङ्कगतां उत्सङ्गे वर्तमानां दयितां प्रियामपि वीणां विहाय प्रचले करे हस्ते निद्रावशाद्भारासहिष्णुतया प्रचलत्वं करस्य । कपोलं विनिवेश्य निधायेत्यर्थः । कुपितेव शयिता कृतशयना अभवत् । उत्प्रेक्षालङ्कारः ।

( ४९ ) विबभाविति । करलग्नवेणुः करे लग्ना आसक्ता वेणुः सुषिरवाद्यविशेषो यस्यास्तथाभूता स्तनविस्रस्तसितांशुका स्तनाभ्यां विस्रस्तं विगलितं सितं श्वेतं अंशुकं वस्त्रं यस्यास्तथाभूता अन्या अपरा शयाना शयनं कुर्वाणा स्त्री ऋजुषट्पदपङ्क्तिजुष्टपद्मा ऋज्वा सरलया षट्पदानां भ्रमराणां पङ्क्त्या जुष्टं सेवितमध्यासितमितियावत् पद्मं कमलं यस्यां तथाभूता जलफेनप्रहसत्तटा जलस्य फेनेन फेनात्मना प्रहसत् हास्यं कुर्वदिव तटं यस्यास्तथाभूता नदीव विबभौ शुशुभे । अत्र करवेणुसितांशुकस्तनानां पद्मषट्पदपङ्क्तिजलफेनतटानि क्रमादुपमानानि । बिम्बानुबिम्बभावेनोपमालङ्कारः । हासस्य श्वेतत्वं कविसमयसिद्धम् । तथा ह्याहुः 'धवलता वर्ण्यते हासकीर्त्योः' इति । अत एव च फेने हास्योत्प्रेक्षा ।

( ५० ) नवेति । तथा अपरा स्त्री नवपुष्करगर्भकोमलाभ्यां नवस्य नूतनस्य पुष्करस्य कमलस्य गर्भवत् अन्तर्भागवत् कोमलौ सुकुमारौ ताभ्याम् । 'बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च ।' इति कमलपर्यायेष्वमरः । तपनीयस्य सुवर्णस्य उज्ज्वले संगते संजातबाहुसंगमे च अङ्गदे बाहुभूषणे (केयूरे) ययोस्तथाभूताभ्याम् । 'तपनीयं शातकुम्भं' इति सुवर्णपर्यायेष्वमरः । 'केयूरमङ्गदं तुल्ये' इति च स

१ द्वि । २ तथा पुरा, पुरा तथा ।

नवहाटकभूषणास्तथान्या वसनं पीतमनुत्तमं वसानाः ।
अवशा बत निद्रया निपेतुर्गजभग्ना इव कर्णिकारशाखाः ॥ ५१ ॥
अवलम्ब्य गवाक्षपार्श्वमन्या शयिता चापविभुग्नगात्रयष्टिः ।
विरराज विलम्बिचारुहारा रचिता तोरणशालभञ्जिकेव ॥ ५२ ॥
मणिकुण्डलदष्टगण्डलेखं मुखपद्मं विनतं तथाऽपरस्याः ।
शतपत्रमिवार्धवक्रनालं स्थितकारण्डवघट्टितं चकाशे ॥ ५३ ॥

---

एव । भुजाभ्यां बाहुभ्यां करणभूताभ्यां प्रियवत् यथा प्रियं दयितं तथा मृदङ्गं एव परिरभ्य आलिङ्गय । परिपूर्वो रभिरालिङ्गने । स्वपिति स्म सुष्वाप निद्रामनुभूतवतीत्यर्थः । 'लट् स्मे' इति लिडर्थे लट् । निद्रया चित्तस्यापहृतत्वात्प्रियबुद्धया मृदङ्गमेवालिङ्गय शिश्य इति भावः ।

( ५१ ) नवहाटकेति । तथा किंच नवहाटकभूषणाः नवानि हाटकस्य सुवर्णस्य भूषणानि अलङ्कारा यासां तथाभूताः । 'हिरण्यं हेम हाटकम् ।' इत्यमरः । अनुत्तमं नास्त्युत्तमं यस्मात्तथाभूतं अत्यन्तमुत्कृष्टमित्यर्थः । पीतं पीतवर्णं वसनं वस्त्रं वसानाः परिदधत्यः । वस आच्छादन इत्यत आदादिकाल्लटः शानच् । अन्याः स्त्रियः कर्त्र्यः निद्रया अवशाः पराधीनाः सत्यः गजभग्नाः गजेन भग्नाः भङ्गं प्रापिताः कर्णिकारशाखाः कर्णिकारस्य परिव्याधापरपर्यायस्य 'पांगारा' इति महाराष्ट्र्यां ख्यातस्य शाखा इव निपेतुः पतन्ति स्म । बतेति खेदे । प्रफुल्लानां कर्णिकारशाखानां सुवर्णवर्णतयेयमुपमा ।

( ५२ ) अवलम्ब्येति । गवाक्षपार्श्वं गवाक्षस्य वातायनस्य पार्श्वं समीपप्रदशविशेषं आलम्ब्य आश्रित्य शयिता निद्रामासेवमाना तत एव च चापविभुग्नगात्रयष्टिः चापवत् धनुर्वत् विभुग्ना वक्रीभूता गात्रयष्टिः सुन्दरं शरीरं यस्यास्तथाभूता । भुग्नेति भुजो कौटिल्य इत्यतो निष्ठायामोदित्वात्तो नः । 'आविद्धं कुटिलं भुग्न' मित्यमरः । तत एव च विलम्बिचारुहारा विलम्बी लम्बमानश्चारुर्मनोहरो हारो मुक्तास्रक् यस्यास्तथाभूता अन्या स्त्री रचिता विनिर्मिता तोरणशालभञ्जिका तोरणस्य द्वारस्य संबन्धिनी शालभञ्जिका पुत्रिकेव विरराज शुशुभे । तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः । अत्र पुनर्द्वारसामान्यार्थ एव प्रयुक्तोऽयं कविना । अन्यथा गवाक्षपार्श्ववर्तिन्यां तोरणशालभञ्जिकोत्प्रेक्षणानुपपत्तेः । 'शालभञ्जी पाञ्चालिका च पुत्रिका ।' इति हैमः । शालेन काष्ठेन भज्यते निर्मीयत इति शालभञ्जिकेति शब्दकल्पद्रुमः । काष्ठादिनिर्मिता स्त्रीप्रतिमा शालभञ्जिकेत्यर्थः ।

( ५३ ) मणिकुण्डलेति । तथा किंच अपरस्याः अन्यस्याः स्त्रियः विनतं उपविश्यैव निद्राणत्वाद्विशेषेण नम्रीभूतं तत एव च मणिकुण्डलदष्टगण्डलेखं मणीनां रत्नानां कुण्डलेन कर्णालङ्कारविशेषेण दष्टा कृतदंशेवात्यन्तं श्लिष्टेत्यर्थः गण्डलेखा कपो-

---

१ साल, माल । २ पत्र । ३ चक्रनाडं, चक्रवाडं ।

अपराः शयिता यथोपविष्टाः स्तनभारैरवनम्यमानगात्र्यः ।
उपगुह्य परस्परं विरेजुर्भुजपाशैस्तपनीयपारिहार्यैः ॥ ५४ ॥
महतीं परिवादिनीं च काचिद्वनितालिङ्ग्य सखीमिव प्रसुप्ता ।
विजुघूर्ण चलत्सुवर्णसूत्रा वदनेनाकुलकर्णिकोज्ज्वलेन ॥ ५५ ॥

लप्रदेशो यस्य तथाभूतं मुखपद्मं पद्म [ कमल ] तुल्यं मुखं, स्थितकारण्डवघट्टितं स्थितेन कारण्डवेन हंसविशेषेण घट्टितं चालितं तत एव च अर्धवक्रनालं अर्धं असमग्रं यथा तथा वक्रं नालं दण्डो यस्य तथाभूतं शतपत्रं कमलमिव चकाशे शुशुभे । काशृ दीप्तौ इत्यतो भौवादिकाल्लिट् । 'नालो नालमथास्त्रियाम्' इत्यमरः । 'शतपत्रं कुशेशय' मिति च कमलपर्यायेषु स एव । नालं च ग्रीवाया उपमानमिति बोध्यम् । बिम्बानुबिम्बभावेनोपमा ।

( ५४ ) अपरा इति । स्तनभारैः स्तनानां भारैः कर्तृभूतैः अवनम्यमानगात्र्यः अवनम्यमानानि विनम्रीक्रियमाणानि गात्राणि शरीराणि यासां तथाभूताः तपनीयपारिहार्यैः तपनीयस्य सुवर्णस्य पारिहार्याणि वलयानि येषु तथाभूतैः । 'आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम्' इत्यमरः । भुजपाशैः पाशसदृशैर्भुजैः बाहुभिः हस्तैरिति यावत् । नियन्त्रणसाधनत्वात्पाशसादृश्यम् । परस्परं अन्योन्यं उपगुह्य आलिङ्ग्य । उपपूर्वो गूहतिरालिङ्गने । शयिता निद्रामनुभवन्त्यः अपराः स्त्रियः कर्त्र्यः यथा उपविष्टा उपविष्टा इव विरेजुः शुशुभिरे । राजतेः फणादित्वादेत्वाभ्यासलोपौ । यथा शब्दोऽत्रोत्प्रेक्षायाम् । 'आलिङ्गनं परिष्वङ्गः संश्लेष उपगूहनम् ।' इति हैमः ।

( ५५ ) महतीमिति । च अपिच सखीमिव महतीं गुर्वीं परिवादिनीं सप्तभिस्तन्त्रीभिर्विशिष्टां वीणां आलिङ्ग्य प्रसुप्ता प्रकृष्टां निद्रामनुभवन्ती काचित् वनिता स्त्री चलत्सुवर्णसूत्रा चलत् कम्पमानं सुवर्णसूत्रं सुवर्णमयं कण्ठसूत्रं नाम अलङ्कारविशेषो यस्यास्तथाभूता सती । निद्राणायाः श्वासप्रश्वासवेगवशात्कण्ठसूत्रचलनम् । चलत्सुवर्णसूत्रामिति पाठे परिवादिन्या विशेषणमेतत् । एवं च सति समाप्तपुनरात्तत्वं दुर्वारम् । आकुलकर्णिकोज्ज्वलेन आकुला स्थानभ्रंशादिना व्याकुलीभूतेवालक्ष्यमाणा या कर्णिका कर्णभूषणं तया उज्ज्वलेन दीप्तिमता वदनेन । 'कर्णललाटाभ्यां कनलङ्कारे' इति कन् । स्त्रीत्वं शब्दस्वाभाव्यात् । विजुघूर्ण घूर्णनं कृतवती । घूर्णनं चात्र 'घोरणे' इति महाराष्ट्र्यां ख्यातो निद्रितस्य ध्वनिविशेषः । स हि भ्राम्यन्निव प्रतिभातीति । 'घूर्ण भ्रमण' इत्यतस्तौदादिकाल्लिट् । 'भ्रमणेऽत्र तुदाद्योः शे स्यातां घुणति घूर्णति ।' इति दैवम् ।

---

१ अवमन्यमानगात्राः । २ सूत्रां ।

पणवं युवतिर्भुजांसदेशादवविस्रंसितचारुपाशमन्या ।
सविलासरतान्ततान्तमूर्वोर्विवरे कान्तमिवाभिनीय शिश्ये ॥५६॥
अपरा न बभुर्निमीलिताक्ष्यो विपुलाक्ष्योऽपि शुभभ्रुवोऽपि सत्यः।
प्रतिसंकुचितारविन्दकोशाः सवितर्यस्तमिते यथा नलिन्यः ॥५७॥
शिथिलाकुलमूर्धजा तथान्या जघनस्रस्तविभूषणांशुकान्ता ।
अशयिष्ट विकीर्णकण्ठसूत्रा गजभग्ने[1] पतिपातिताऽङ्गनेव ॥ ५८ ॥

(५६) पणवमिति । अन्या इतरा युवतिः तरुणी । 'यूनस्तिः' रिति तिः । भुजांसदेशात् भुजयोः बाह्वोः अंसौ शिरसी तयोः प्रदेशात् स्कन्धप्रदेशादित्यर्थः । अंसपदस्य भुजशिरोवाचकत्वेऽपि भुजपदस्य पार्थक्येन प्रयोगाच्छिरोमात्रवाचित्वम् । विशिष्टवाचकानामितिन्यायात् । अवविस्रंसितचारुपाशं अवविस्रंसितः अधोविगलितः चारुः सुन्दरः पाशो भुजप्रदेशावसञ्जनार्थो रज्जुर्यस्य तथाभूतम् । पणवं आनद्धवाद्यविशेषम् । सविलासरतान्ततान्तं सविलासं विलाससहितं यद्रतं सुरतक्रीडा तस्य अन्ते अवसाने तान्तं श्रान्तं कान्तं प्रियमिव ऊर्वोः विवरे अन्तरे अभिनीय नीत्वेत्यर्थः । अभिरत्र धात्वर्थानुवर्ती । शिश्ये शयनं कृतवती ।

(५७) अपरा इति । अपरा अन्याः स्त्रियो निमीलिताक्ष्यः निमीलितानि निमिषितान्यक्षीणि यासां तथाभूता अत एव च वस्तुतः विपुलाक्ष्यः विपुले विशाले अक्षिणी यासां तथाभूता अपि। 'बहुव्रीहौ सक्थ्यक्ष्णो' रित्यादिना षचि षिद्गौरादिभ्यश्चेति ङीष्। शुभभ्रुवः शुभा भ्रुवो यासां तथाभूता अपि च सत्यः। सवितरि सूर्ये अस्तमिते अस्तं गते सति प्रतिसंकुचितारविन्दकोशाः प्रतिसंकुचिता निमीलिता अरविन्दकोशाः कमलकलिका यासां ताः नलिन्यः कमलिन्य इव न बभुः न शुशुभिरे । 'कोशोऽस्त्री कुड्मले पात्रे' इति मेदिनी । नलिन्य इति पुष्करादित्वादिनिः । यथा विपुलकमलशालिन्योऽपि कमलिन्यः कोशानां निमीलने नैव शोभन्त एवं विपुलाक्ष्योऽपि वनिता अक्ष्णां निद्रया निमीलितत्वान्न शुशुभिर इति भावः । उपमा ।

(५८) शिथिलेति । तथा किंच शिथिलाकुलमूर्धजा शिथिला आकुला जटिलत्वमनुप्राप्ताश्च मूर्धजाः केशा यस्यास्तथाभूता जघनस्रस्तविभूषणांशुकान्ता जघनात्कटिपुरोभागात् स्रस्तं विगलितं भूषणं काञ्चीरूपं च अंशुकान्तो वस्त्रप्रान्तश्च यस्यास्तथाभूता विकीर्णं निद्रासंरम्भवशाद्विच्छिन्नतया तत इतो विक्षिप्तं कण्ठसूत्रं भूषणविशेषो यस्यास्तथाभूता अन्या स्त्री गजभग्ने गजवत् भग्नं मर्दनमिति यावत् यस्मिंतस्मिन् गजोपमर्दिताख्ये कामशास्त्रप्रसिद्धे रतविशेषे पतिपातिता पत्या प्रियेण पातिता शय्यायां विनिपातिता अङ्गना स्त्रीव अशयिष्ट शयनं कृतवती । शीङो लुङ् । सापि हि स्त्री संरम्भवशाच्छिथिलाकुलमूर्धजत्वादिविशिष्टा भवति । अत्र गजभग्ना प्रतिपातितेत्यादिपाठस्त्वस-

१ भग्ना प्रति- ।

अपरास्त्ववशा ह्रिया वियुक्ता धृतिमत्योऽपि वपुर्गुणैरुपेताः ।
विनिशश्वसुरुल्बणं शयाना विकृताक्षिप्तभुजा जजृम्भिरे च ॥५९॥
व्यपविद्धविभूषणस्रजोऽन्या विसृता[१]गुण्ठनवाससो विसंज्ञाः ।
अनिमीलितशुक्लनिश्चलाक्ष्यो न विरेजुः शयिता गतासुकल्पाः ६०
विवृतास्यपुटा विवृत्त[२]गात्री प्रपतद्वक्त्रजला प्रकाशगुह्या ।
अपरा मदघूर्णितेव शिश्ये न बभाषे विकृतं वपुः पुपोष ॥ ६१ ॥

मञ्जसः कामशास्त्रानभिज्ञत्वमूलक एव । गजोपमर्दितलक्षणं तु कामशास्त्रे सांप्रयोगिके षष्ठेऽध्याये द्रष्टव्यम् । कण्ठसूत्रपदस्य चात्र स्तनाभिघातविशेषत्वं व्याचक्षाणो भ्रान्त एवासूक्ष्मदृष्टिः कोपि ।

( ५९ ) अपरा इति । अवशा निद्रया परवशाः तत एव च धृतिमत्योपि वस्तुतो धैर्यवत्योऽपि ह्रिया लज्जया लज्जासूचकैर्व्यापारैरित्यर्थः वियुक्ताः शून्याः वपुर्गुणैः वपुषः शरीरस्य गुणैः सौन्दर्यादिभिः उपेता युक्ताः शयानाः शयनं कुर्वाणाः अपरा अन्याः स्त्रियः उल्बणं स्पष्टं यथायथा विनिशश्वसुः विशेषेण निश्वासान् मुमुचुः । 'स्पष्टं स्फुटं प्रव्यक्तमुल्बणम्' इत्यमरः । च किं च विकृताक्षिप्तभुजाः विकृतं बीभत्सं यथा तथा आक्षिप्तौ आकृष्टौ भुजौ याभिस्तथाभूताः सत्यः जजृम्भिरे जृम्भां कृतवत्यः । जृभि गात्रविनाम इत्यतो लिट् ।

( ६० ) व्यपविद्धेति । व्यपविद्धविभूषणस्रजः व्यपविद्धानि शयनसंरम्भवशात् चूर्णीभूतानि विभूषणानि स्रजो माल्यानि च यासां तथाभूताः । अपविद्धं चूर्णितमिति कल्पद्रुमः । विसृतागुण्ठनवाससः विसृतं विगलितं आगुण्ठनवासः अवगुण्ठनवस्त्रं यासां तथाभूताः विसंज्ञाः विगता संज्ञा चेतना याभ्यस्तथाभूताः अनिमीलितशुक्लनिश्चलाक्ष्यः न निमीलितानि निमेषं प्राप्तानि शुक्लानि तारकाणां परिवृत्तत्वाच्छ्वेतवर्णानि निश्चलानि च अक्षीणि यासां तथाभूताः । शयितानां चैवंभावः स्वाभाविकः कासांचित् । अन्याः शयिताः निद्रां प्राप्ताः स्त्रियो गतासुकल्पाः गता असवः प्राणा यासां ता मृताः स्त्रियः इव । कल्पप ईषदसमाप्त्यर्थकत्वेऽपि सादृश्यार्थकत्वं कविसमयात् । न विरेजुः न शुशुभिरे । राजृ दीप्तौ इत्यतो लिट् । फणादित्वादेत्वाभ्यासलोपौ । यथा मृताः स्त्रियो न शोभन्त एवं ता न शुशुभिर इति भावः ।

( ६१) विवृतेति । मदघूर्णिता मदेन मद्यपानादिजन्मना इन्द्रियवैक्लव्येन घूर्णिता भ्रान्तेव अपरा इतरा स्त्री विवृतास्यपुटा विवृतं उद्घाटितं आस्यपुटं पात्रविशेषसदृशं मुखं यस्यास्तथाभूता विवृत्तगात्री विवृत्तानि विवर्तनं प्राप्तानि विलुठितानीत्यर्थः । गात्राण्यवयवा यस्यास्तथाभूता । ' शय्याप्रान्त**विवर्तनै**र्विगमयत्युन्निद्र एव क्षपाः ' इति शाकुन्तलम् । प्रपतद्वक्त्रजला प्रपतत् अतिशयेन विगलत् वक्त्रजलं लाला यस्यास्तथाभूता प्रकाशगुह्या प्रकाशानि प्रकटीभूतानि गुह्यानि गोपनीयान्यङ्गानि

१ विसृताग्रन्थन । २ विवृद्धगात्रा ।

इति सत्त्वकुलानुरूपरूपं विविधं स प्रमदाजनः शयानः।
सरसः सदृशं बभार रूपं पवनावर्जितरुग्णपुष्करस्य ॥ ६२॥

समवेक्ष्य ततश्च ताः शयाना विकृतास्या युवतीरधीरचेष्टाः।
गुणवद्वपुषोऽपि वल्गुभासो[1] नृपसूनुः स विगर्हयाञ्चकार[2] ॥ ६३ ॥

अशुचिर्विकृतश्च जीवलोके वनितानामयमीदृशः स्वभावः।
वसनाभरणैस्तु वञ्च्यमानः पुरुषः स्त्रीविषयेषु रागमेति ॥ ६४ ॥

---

यस्यास्तथाभूता च सती शिश्ये शयाना आसीत् तत एव च न बभाषे भाषणं न कृतवती विकृतं बीभत्सतां प्राप्तं वपुः पुपोष अभिवर्धितवती वपुषो बीभत्सतां समभिवर्धितवतीत्यर्थः। अत्र विवृद्धगात्रेतिपाठकल्पनं शब्दानुशासनविरुद्धम्।

(६२) इतीति। इति एवंप्रकारेण सत्वकुलानुरूपरूपं सत्त्वं गुणविशेषः कुलं वंशश्च तयोः अनुरूपं योग्यं अनुसारीत्यर्थः रूपं आकारो यस्मिन्कर्मणि तद्यथा तथा। शयानानां हि केषांचिदाकारः सात्त्विकत्वमनुसरति केषांचिच्च वंशक्रमप्राप्तं संस्कारमिति प्रोक्तं सत्त्वेत्यादि। विविधं नैकप्रकारं च यथा तथा शयानो निद्रामनुभवन् स प्रमदाजनः तरुणीसमूहः कर्ता पवनावर्जितरुग्णपुष्करस्य पवनेन वायुना आवर्जितानि वशीकृतानि आक्रान्तानीति यावत् तत एव च रुग्णानि रुग्णवत् क्षीणानि भग्नतां प्राप्तानीत्यर्थः पुष्कराणि कमलानि यस्य तथाभूतस्य सरसः सरोवरस्य सदृशं तुल्यं रूपं आकारं बभार धारितवान्। निद्रापवनयोर्नारीजनपुष्करसमूहयोर्बिम्बानुबिम्बत्वम्। उपमालङ्कारः।

(६३) समवेक्ष्येति। ततश्च स राजसूनुः राज्ञः पुत्रो बुद्धः गुणवद्वपुषः गुणवन्ति सुरूपत्वादिगुणशालीनि वपूंषि शरीराणि यासां तथाभूताः वल्गुभासः वल्गुः मनोहरा भा कान्तिर्यासां तथाभूता अपि। 'चारु हारि रुचिरं मनोहरं वल्गु कान्तमभिरामबन्धुरे।' इति हैमः। शयानाः शयनं कुर्वाणास्ता युवतीस्तरुणीः विकृतास्या विकृतानि बीभत्सानि आस्यानि मुखानि यासां तथाभूताः अधीरचेष्टाः अधीरा अप्रगल्भाश्चेष्टाः शारीरव्यापारा यासां तथाभूताः समवेक्ष्य दृष्ट्वा विगर्हयाञ्चकार विशेषेण निन्दितवान्। गर्हयतेर्लिट्।

(६४) गर्हणामाह द्वाभ्याम्। अशुचिरिति। जीवलोके मर्त्यलोके। जीवा हि मृत्युधर्माणः प्राणिनः। वनितानां स्त्रीणां अयं मया साक्षात्क्रियमाणः ईदृशः एवंप्रकारः अशुचिः अपवित्रः विकृतो बीभत्सश्च स्वभावः अस्ति। ननु भो यद्येवं कथं तर्हि तासु पुरुषाणां प्रीतिरिति चेत्तत्राह **वसनाभरणै**रिति। तु किन्तु पुरुषः कर्ता वसनाभरणैः वसनैर्वस्त्रैः आभरणैरलङ्कारैश्च कर्तृभूतैः नयनमनोहारिभिरिति भावः वञ्च्यमानः यथा वयं तथैवेयं परमार्थतो हृदयङ्गमाऽस्माकं धारयित्री योषिदिति

---

१ भासा। २ बभूव।

विमृशेद्यदि योषितां मनुष्यः प्रकृतिं स्वप्नविकारमीदृशं च ।
ध्रुवमत्र न वर्धयेत्[1]प्रसादं गुणसंकल्पहतस्तु रागमेति ॥ ६५ ॥
अथ तस्य तदन्तरं विदित्वा निशि निश्चिक्रमिषा समुद्बभूव ।
अवगत्य[2] मनस्ततोऽस्य देवैर्भवनद्वारमपावृतं बभूव[3] ॥ ६६ ॥
अथ सोऽवततार हर्म्यपृष्ठाद्युवतीस्ताः शयिता विगर्हमाणः ।
अवतीर्य ततश्च निर्विशङ्को गृहकक्ष्यां प्रथमं विनिर्जगाम ॥ ६७ ॥

---

ज्ञापयित्वा प्रतार्यमाणः सन् स्त्रीविषयेषु स्त्रीरूपेषु विषयेषु बन्धनसाधनेषु मोक्षप्रतिकूलेष्वर्थेष्वित्यर्थः । विशेषेण षिण्वन्ति प्राणिनमिति हि विषया उच्यन्ते, षिञ् बन्धन इत्यतो ह्यचि विनिष्पन्नो विषयशब्द इति । स्त्रीरूपविषयविषय इत्यर्थः । रागं प्रेम एति प्राप्नोति । नैव पुनस्तत्र रागे तासां स्वभावो हेतुरिति भावः ।

( ६५ ) विमृशेदिति । यदि मनुष्यः योषितां स्त्रीणां प्रकृतिं स्वभावं ईदृशं एवंप्रकारं स्वप्नविकारं स्वप्नस्य निद्रायाः सम्बन्धिनं विकारं विकृतत्वं च विमृशेद्विचारयेत् तर्हि अत्र आसु स्त्रीषु प्रसादं अनुग्रहं ध्रुवं नियतं न वर्धयेत् । आस्वभिवृद्धमनुग्रहं न कुर्यादित्यर्थः । कथं तर्हि मनुष्य एतास्वनुरज्यत इत्याह गुणेति । तु किन्तु गुणसंकल्पहतः गुणानां स्त्रीषु विद्यमानतया संभाव्यमानानां सद्गुणानां संकल्पेन कल्पनया हतो मृततुल्यतां विसंज्ञप्रायतां युक्तायुक्तविवेकशून्यतामित्यर्थः नीतः सन् रागं एति प्राप्नोति । विवेकशून्यत्वात्स्वयं कल्पितैरेव गुणैरेतास्वनुरागमुपयातीति भावः ।

( ६६ ) अथेति । अथ स्त्रीजनगर्हणानन्तरं निशि तस्यां रात्रौ तत् अन्तरं अवकाशं विदित्वा ज्ञात्वा । 'अन्तरमवकाशावधिपरिधाने'त्यमरः । ज्ञानस्य निश्चिक्रमिषायामारोपान्न समानकर्तृकत्वभङ्गः । तस्य बुद्धस्य निश्चिक्रमिषा निर्गन्तुं वनाय प्रस्थातुं इच्छा समुद्बभूव उत्पन्ना । ततः तदनन्तरं भवनद्वारं गृहस्य द्वारं अस्य बुद्धस्य मनः इच्छामिति यावत् अवगत्य ज्ञात्वा देवैः अपावृतं उद्घाटितं बभूव आसीत् । अपाङ्पूर्वाद्वृणोतेरुद्घाटनार्थकान्निष्ठा । बुद्धस्याभिलाषं बुद्ध्वा निर्गमनसौकर्याय देवा गृहस्य द्वारमुद्घाटयामासुरिति भावः ।

( ६७ ) अथेति । अथ द्वारोद्घाटनानन्तरं शयिता निद्रां प्राप्ताः ता युवतीः तरुणीः विगर्हमाणः निन्दन् । गर्ह कुत्सायामित्यतो भौवादिकादनुदात्तेतो लटः शानच् । 'भूवादेः शपि गर्हणार्थविषये गर्हैर्भवेद्गर्हते-।' इति दैवम् । स बुद्धः हर्म्यपृष्ठात् मन्दिरोपरिभागात् अवततार अवरोहणं कृतवान् । च किंच ततः तस्मात् हर्म्यपृष्ठात् अवतीर्य अवरोहणं कृत्वा निर्विशङ्कः निर्भयः सन् प्रथमं आदौ गृहकक्ष्यांगृहस्य कक्ष्यां प्रकोष्ठं विनिर्जगाम गतवान् । उपसर्गावत्र धात्वर्थानुवर्तिनौ । 'कक्ष्या

---

१ प्रमादं, प्रमोदं इति । २ अवगम्य । ३ चकार ।

तुरगावचरं स बोधयित्वा जविनं छन्दकमित्थ[1]मभ्युवाच ।
हयमानय कण्ठकं[2] त्वरावानमृतं प्राप्तुमितो हि[3] मे यियासा ॥६८॥
यदियं[4]मम तुष्टिरद्य जाता व्यवसायश्च यथा धृतौ निविष्टः ।
विजनेऽपि च नाथवानिवास्मि ध्रुवमर्थोऽभिमुखः स मे य इष्टः ॥
ह्रियमेव च सन्नतिं च हित्वा शयिता मत्प्रमुखे[5] यथा युवत्यः ।
विवृतं[6] च यथा स्वयं कवाटं[7] नियतं यातुमनामयाय कालः ॥ ७०॥

---

प्रकोष्ठे हर्म्यादेः । ' इत्यमरः । प्रकोष्ठश्चान्तर्गृहमिति महेश्वरः । यद्वा प्रथमं गृहकक्ष्यामवतीर्य विनिर्जगामेति योज्यम् । प्राथमिकेऽर्थे च्छन्दकस्य प्रतिबोधनाय कक्ष्यायांगमनं द्वितीये निर्गमनोत्तरं छन्दकस्य प्रतिबोधनमिति द्रष्टव्यम् । एष किल नारीस्वापतन्निन्दाविषयको वृत्तान्तो ललितविस्तरे पञ्चदशेऽध्याये 'अद्राक्षीत् खल्वपि बोधिसत्त्व ' इत्यादिना प्रबन्धेनोपवर्णितः ।

( ६८ ) तुरगेति । स बुद्धः जविनं जवो वेगोऽस्यास्ति तथाभूतं वेगवन्तं, अकाले राजपुत्रेण प्रबोधनाद्वेगवत्त्वम् । तुरगावचरं तुरगस्याश्वस्य अवचरं परिचारकं अश्वपालमित्यर्थः छन्दकं एतन्नामानं बोधयित्वा जागरितं कृत्वा इत्थं वक्ष्यमाणप्रकारेण अभ्युवाच उक्तवान् । वचनमाह । त्वरावान् त्वरितः सन् कण्ठकं एतन्नामानं हयं अश्वं आनय । किमर्थमिदानीमश्वानयनमिति चेत्तत्राह । अमृतमिति । हि यतः मे अमृतं मोक्षं प्राप्तुं यियासा यातुं ( गन्तुं ) इच्छा अस्ति । तस्मादानयेति भावः । ' महानन्दोऽमृतं सिद्धिः ' इति मोक्षपर्यायेषु हैमः ।

( ६९ ) ननु भो दुष्प्रापमेवामृतं भवादृशैर्नृपकुमारैस्तत्कुतो यियासेयमिति चेत्तत्राह । यदीति । यत् अद्य मम इयं मयाऽनुभूयमाना तुष्टिः सन्तोषः जाता उत्पन्ना । च किंच यथा यस्मात् व्यवसायो मे निश्चयः धृतौ धैर्ये निविष्टः प्रविष्टः । मे निश्चयो धैर्यं विषयीकृतवान् अमृतप्राप्त्यर्थं गमने यद्धैर्यं तद्विषये मे निश्चयः संवृत्त इति भावः । धृतिर्धारणाख्यो योगस्यान्तरङ्गविशेषो वा तत्र व्यवसायो निविष्टः धारणानुष्ठाने निश्चयः संवृत्त इत्यर्थः । धारणा च ध्यानादीनुपलक्षयति । च किंच यथेत्यनुवर्तते यस्मात् विजने निर्जनेऽपि प्रदेशे नाथवान् नाथः पालयिता विद्यतेऽस्य तथाभूतः पालकविशिष्ट इव अस्मि । यथाशब्दबलात्तथेत्यध्याह्रियते । तथा तस्मादित्यर्थः यः अर्थः इष्टः इच्छाविषयः सः ध्रुवं निश्चितं मे अभिमुखः संमुखः । मत्समागमार्थं मत्संमुखीभूत इत्यर्थः अस्तीति शेषः । यथेयमवस्थितिस्तथाऽवश्यं मयाभीष्टोऽर्थः प्राप्यत इति भावः । 'सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तः करणप्रवृत्तय ' इति हि निजगदुः कवयः । ' धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु ' इति विश्वः ।

( ७० ) यद्यप्येवं तथाप्यनुकूलस्तावत्समयः प्रतीक्ष्यतामिति चेदयमेवासौ समय इत्याह । ह्रियमिति । यथा यस्मात् ह्रियं लज्जां, एव चेत्यव्ययद्वयं चार्थे । सन्नतिं

---

१ मित्युवाच । २ कन्थकं । ३ ऽद्य । ४ या मम । ५ प्रमुखं । ६ विवृते । ७ कपाटे

प्रतिगृह्य ततः स भर्तुराज्ञां विदितार्थोऽपि नरेन्द्रशासनस्य ।
मनसीव परेण चोद्यमानस्तुरगस्यानयने मतिं चकार ॥ ७१ ॥

अथ हेमखलीनपूर्णवक्त्रं लघुशय्यास्तरणोपगूढपृष्ठम् ।
बलसत्त्वजवत्वरोपपन्नं स वराश्वं तमुपानियाय भर्त्रे ॥ ७२ ॥

प्रततत्रिकपुच्छमूलपार्ष्णि निभृतं ह्रस्वतनूजकुक्षि[1]कर्णम् ।
वि[2]ततोन्नतपृष्ठकुक्षिपार्श्वं विपुलप्रोथललाटकट्युरस्कम् ॥ ७३ ॥

उपगुह्य स तं विशालवक्षाः कमलाभेन च सान्त्वयन्करेण ।
मधुराक्षरया गिरा शशास ध्वजिनीमध्यमिव प्रवेष्टुकामः ॥ ७४ ॥

---

विनयं च हित्वा त्यक्त्वा युवत्यः तरुणस्त्रियः मत्संमुखे मम संमुखे शयिताः सुप्ताः यस्मादयमघटनीयोऽर्थो घटित इत्यर्थः । यथा च कवाटं द्वारस्य पिधानफलकं स्वयं विवृतं उद्घाटितं तथेति शेषः । नियतं निश्चितं अनामयस्य नास्ति आमयो दुःखं यस्मिं स्तस्मै मोक्षाय मोक्षं प्राप्तुमित्यर्थः कालः अयं योग्यः समयः अस्तीति शेषः । वैराग्यजननायैव स्त्रीणामेवंशयनं निर्गमनायैव च स्वयमेव द्वारोद्घाटनमित्यनुकूलत्वादयमेव गमनोचितः काल इति भावः ।

( ७१ ) प्रतिगृह्येति । ततः स छन्दकः नरेन्द्रशासनस्य राज्ञः शुद्धोदनस्याज्ञायाः विदितार्थोऽपि विदितो ज्ञातः अर्थो वाच्यं येन तथाभूतोऽपि राज्ञ आदेशं ज्ञातवानपीत्यर्थः । भर्तुः पालकस्य बुद्धस्य आज्ञां 'आनीयतामश्व' इत्येवंरूपां प्रतिगृह्य स्वीकृत्य मनसि अन्तःकरणे परेण इतरेण केनापि चोद्यमान इव प्रवर्त्यमान इव सन् तुरगस्य अश्वस्य आनयने आनयनविषये मतिं इच्छां चकार कृतवान् । अश्वमानेतुमियेषेत्यर्थः । 'मतिर्हीच्छास्मृतिष्वपि' इति विश्वः ।

( ७२ ) अथेति । अथ इच्छाविधानानन्तरं स च्छन्दकः हेमखलीनपूर्णवक्त्रं हेम्नः सुवर्णस्य खलीनेन कविकया 'लगाम' इति महाराष्ट्र्यां ख्यातेन पूर्णं युक्तमिति यावत् वक्त्रं मुखं यस्य तथाभूतम् । लघुशय्यास्तरणोपगूढपृष्ठं लघुः अल्पा शय्या तल्पं यस्मिंस्तेन आस्तरणेन अश्वपृष्ठास्तरणेन पर्याणेनेत्यर्थः उपगूढं संश्लिष्टं पृष्ठं यस्य तथाभूतं दत्तपर्याणमित्यर्थः । बलसत्त्वजवत्वरोपपन्नं बलं सामर्थ्यं सत्त्वं गुणविशेषः जवत्वरा वेगस्य शीघ्रता च तैः उपपन्नं युक्तम् । तं कण्ठकं नाम वराश्वं श्रेष्ठमश्वं भर्त्रे उपानिनाय आनीय समर्पितवान् ।

( ७३-७४ ) अथ बुद्धस्याश्वशासनप्रक्रममाचष्टे प्रततेत्यादिना पद्यद्वितयेन । प्रततेति । ध्वजिनीमध्यं ध्वजिन्याः ( ध्वजविशिष्टायाः ) सेनाया मध्यं प्रवेष्टुकामः प्रवेष्टुं काम इच्छा यस्य तथाभूतः । 'तुंकाममनसोरपी' ति मलोपः । विजयार्थी वीर इवेत्यर्थः । 'ध्वजिनी वाहिनी सेने' त्यमरः । विशालवक्षाः विशालं विस्तृतं

---

१ पृष्ठ । २ विनतो ।

बहुशः किल शत्रवो निरस्ताः समरे त्वामधिरुह्य पार्थिवेन ।
अहमप्यमृतं परं यथावत्तुरगश्रेष्ठ लभेय तत्कुरुष्व ॥ ७५ ॥

वक्ष उरःप्रदेशो यस्य तथाभूतः स बुद्धः कर्ता । 'वेः शालच्शङ्कटचौ' इति शालच् । प्रततत्रिकपुच्छमूलपार्ष्णिः प्रतता अत्यन्तं विस्तृताः त्रिकं पृष्ठवंशस्याधोभागः पुच्छमूलं पार्ष्णिः खुरपश्चाद्भागश्चेत्येते यस्य तथाभूतम् । 'पृष्ठवंशाधरे त्रिकम्' इति 'तद्ग्रन्थी (पदग्रन्थी) घुटिके गुल्फौ पुमान्पार्ष्णिस्तयोरधः ।' इति चामरः । निभृतं विनयवन्तं अनुद्धतमित्यर्थः । 'निभृतविनीतप्रश्रिताः समाः' इत्यमरः । ह्रस्वतनूजकुक्षिकर्णं तन्वां शरीरे जायन्त उत्पद्यन्ते तनूजा रोमाणीत्यर्थः । 'सप्तम्यां जनेर्डः' इति डः । ते च कुक्षिः उदरं च कर्णौ च तनूजकुक्षिकर्णं ह्रस्वं दीर्घेतरत् तनूजकुक्षिकर्णं यस्य तथाभूतम् । अम्भोरुहादिषु उत्तरपदस्यापि पर्यायपरिवृत्तिसहिष्णुत्वाद्रुहिसमानार्थको जनिरपि प्रयुज्यते अम्भोजमित्यादौ । तनूरुहशब्दस्य पुनर्नैव परिवृत्तिसहिष्णुत्वं संदृष्टं क्वापि । 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः अत्र तनूजपृष्ठकर्णमिति पाठस्त्वसमञ्जसः । पृष्ठस्य ह्रस्वताया अश्वशास्त्रविरुद्धत्वात् । कुक्षेस्तु ह्रस्वत्वं शुक्रः प्राह 'ह्रस्वकुक्षिखुरश्रुतिः' इति । विततोन्नतपृष्ठकुक्षिपार्श्वं विततं विस्तृतं चोन्नते च विततोन्नतानि पृष्ठं च कुक्षेः पार्श्वे च पृष्ठकुक्षिपार्श्वाणि विततानि पृष्ठकुक्षिपार्श्वाणि यस्य तथाभूतः विततं पृष्ठं उन्नते च कुक्षिपार्श्वे यस्येत्यर्थः । अत्र च विनतोन्नतमिति पाठो नितान्तमेवायुक्तः । विनतोन्नतत्वं हि तुरंगमस्य पृष्ठादीनामदृष्टमनोहराश्वैरेवोपवर्णयितुं युक्तं नान्यैः । विपुलप्रोथललाटकट्युरस्कं विपुलं महत् प्रोथं नासिका ललाटं कटिः उरश्च यस्य तथाभूतं । 'उरः प्रभृतिभ्य' इति कप् । 'प्रगल्भोत्तुङ्गनासिकः' इत्यश्वलक्षणप्रस्तावे शुक्रः । 'पृथुलं महत् । वड्रोरुविपुल' मित्यमरः । तं अश्वं उपगुह्य आलिङ्ग्य 'संश्लेष उपगूहनम्' इत्यमरः । च किंच कमलाभेन कमलवदाभा कान्तिर्यस्य तथाभूतेन कमलसदृशेनेत्यर्थः करेण सान्त्वयन् आस्फालनेन विगतक्षोभं कुर्वन् । अश्वस्य हि क्षोभापनयार्थं विस्रम्भजननार्थं च ग्रीवादिकं करेणास्फाल्यते । मधुराक्षरया मधुराणि श्रवणहराणि अक्षराणि वर्णा यस्यां तथाभूतया गिरा वाण्या शशास अनुशिष्टवान् उपदिष्टवानिति यावत् । 'उत्कीर्णमिव जङ्घासु विस्तारितमिवोरसि श्लक्ष्णीकृतमिव मुखे प्रसारितमिव कन्धरायामुल्लिखितमिव पार्श्वयोर्द्विगुणीकृतमिव जघनभागे' इति कादम्बर्यामिन्द्रायुधोपवर्णने । एतेन पार्श्वयोर्विनतोन्नतत्वं सुदूरतः क्षिप्तम् ।

(७५) शासनमाह बहुश इति । हे तुरगश्रेष्ठ अश्वश्रेष्ठ पार्थिवेन पृथिव्या ईश्वरेण राज्ञा शुद्धोदनेन त्वामधिरुह्य आरुह्य समरे युद्धे शत्रवो वैरिभूता बहुशः बहवः पुरुषा निरस्ताः पराभूताः । बहुश इति बह्वल्पार्थाच्छस् कारकादन्यतरस्यामिति शस् । किलेति प्रसिद्धौ निश्चये वा । 'किल शब्दस्तु वार्तायां संभाव्येऽनुनयेऽपि च ।

१ कालि— ।

**सुलभाः खलु संयुगे सहाया विषयावाप्तिसुखे धनार्जने वा ।**
**पुरुषस्य तु दुर्लभाः सहायाः पतितस्यापदि धर्मसंश्रये वा ॥ ७६॥**
**इह चैव भवन्ति ये सहायाः कलुषेऽधर्मणि धर्मसंश्रये वा ।**
**अवगच्छति मे यथान्तरात्मा नियतं तेऽपि जनास्तदंशभाजः ७७**

अलीके च प्रसिद्धौ च निश्चयेऽपि च दृश्यते ।' इत्यव्ययकोशः । त्वामधिरुह्येत्युक्तेरधिरोढुरभीष्टपूरणशक्तिस्त्वयि विद्योतत इति द्योत्यते । यथा त्वया शत्रुविजये राज्ञः साहाय्यमाहितं तथा ममापि विधीयतामित्याह । **अहमपीति** । अहमपि यथावद्यथायोग्यं परं श्रेष्ठं अमृतं मोक्षं येनेति तच्छब्दबलादध्याह्रियते । येन कर्मणा लभेय प्राप्नुयाम् । लभेर्लिङ् । तत् कर्म कुरुष्व । अत्र कलिशत्रव इत्यपपाठः । निरसनीयानां शत्रूणां कलिविशिष्टतया पुनः कलिपदोपादानानौचित्यात् ।

( ७६ ) ननु भोः किं मया? राजपुत्रस्य हि ते भूयांस एव सहायाः संपद्येरन्निति चेन्नैतदेवमित्याह । सुलभा इति । पुरुषस्य संयुगे युद्धे 'युद्धं युत्प्रधनं मृधं समुदयः संयत्कलिः संयुगम् ।' इति हलायुधः । विषयावाप्तिसुखे विषयाणां स्त्रीप्रभृतीनां अवाप्तेः संबन्धिनि सुखे सुखप्राप्तिविषय इत्यर्थः । वा अथवा धनार्जने द्रव्यसंपादनविषये सहायाः साहाय्यकर्तारः सुलभाः सुखेन लब्धुं शक्याः । खलु नात्र संदेह इति भावः । तु किंतु आपदि विपत्तौ ( व्यसने ) पतितस्य विपदा समाक्रान्तस्येत्यर्थः । सहाया दुर्लभाः दुःखेन लब्धुं शक्याः वा अथवा धर्मसंश्रये धर्मस्य संश्रयः आश्रयणकर्म तस्मिन् विषये सहाया दुर्लभा इति पूर्वेण संबन्धः । आपदि च धर्मसंश्रयणकर्मणि च साहाय्यस्याधातारो दुर्लभा इति भावः । पतितस्य निकृष्टां दशामनुप्राप्तस्येति वा । अतस्त्वमेव मे साहाय्यमाधत्स्वेत्याशयः ।

( ७७ ) ननु भोः किमिति निष्फले कर्मणि मया प्रवर्तनीयमिति चेन्नैतन्निष्फलमित्याह । इहेति । चैव किंच इह अस्मिँल्लोके अधर्मणि नास्ति धर्मो यस्मिन् तथाभूते । धर्मादनिच् केवलादित्यनिच् । कलुषे पापे पापकर्मणीत्यर्थः 'कलुषं वृजिनैनोऽघमंहोदुरितदुष्कृतम् ।' इत्यमरः । भूयसां तत्रैव सहायत्वात्कलुषस्य प्रथमतो निर्देशः । वा अथवा धर्मसंश्रये धर्मावलम्बनकर्मणि ये सहायाः साहाय्यकर्तारो भवन्ति तेऽपि जनाः कर्तारः यथा मे अन्तरात्मा मनः अवगच्छति जानाति तथेति यथाशब्दबलाल्लभ्यते । मदीयस्य हृदयस्य ज्ञानानुसारेणेत्यर्थः । तदंशभाजः तयोर्धर्मस्य च पापस्य च अंशं भजन्ति तथाभूता भवन्तीति शेषः । यथाहं पश्यामि तथा पापे साहाय्यकर्तारः पापस्य धर्मे च साहाय्याधातारो धर्मस्यांशं विन्दन्तीति भावः । अंशभाज इति 'भजो ण्वि' रिति ण्विः । ततश्च धर्मे मे साहाय्यं कुर्वाणस्त्वमपि धर्मं समवाप्स्यसीत्यभिप्रायः ।

१ वाप्त— ।

तदिदं परिगम्य धर्मयुक्तं मम निर्याणमतो जगद्धिताय ।
तुरगोत्तम वेगविक्रमाभ्यां प्रयतस्वात्महिते जगद्धिते च ॥ ७८ ॥
इति सुहृदमिवानुशिष्य कृत्ये तुरगवरं नृवरो वनं यियासुः ।
सितमसितगतिद्युतिर्वपुष्मान् रविरिव शारदमभ्रमारुरोह ॥७९॥
अथ स परिहरन्निशीथचण्डं परिजनबोधकरं ध्वनिं सदश्वः ।
विगतहनुरवः प्रशान्तहेषश्चकितविमुक्तपदक्रमो जगाम ॥ ८० ॥

---

( ७८ ) फलितमाह **तदिति** । तत् तस्मात्कारणात् हे तुरगोत्तम अश्वश्रेष्ठ अतः अस्मात्प्रदेशात् जगद्धिताय जगतो हितार्थं धर्मयुक्तं धर्मेण संबद्धं धर्मानुगतमित्यर्थः मम मत्कर्तृकं इदं निर्याणं निर्गमनं परिगम्य ज्ञात्वा । 'परिगतपरिगन्तव्य एव भवान्' इति वेणीसंहारम् । वेगविक्रमाभ्यां वेगेन विक्रमेण शक्तिसंपदा च करणभूताभ्याम् । 'विक्रमस्तु पुमान् क्रान्तिमात्रे स्याच्छक्तिसंपदि ।' इति मेदिनी । आत्महिते आत्मनः स्वस्य हितविषये जगद्धिते जगतो हितविषये च प्रयतस्व प्रयत्नं कुरु । अहं किल जगतो हितं साधयिष्यामि तत्र च साहाय्यमादधानस्त्वं मदीयफलांशभाक् सन्नात्मनश्च परम्परया जगतश्च हितस्य साधयिता भविष्यसीति तत्र प्रयतस्वेति भावः ।

( ७९ ) इतीति । इति एवं प्रकारेण सुहृदं सखायामिव तुरगवरं अश्वश्रेष्ठं कृत्ये कर्तव्यविषये अनुशिष्य उपदिश्य वनं यियासुः यातुं (गन्तुं) इच्छुः असितगतिद्युतिः असिता कृष्णा गतिर्मार्गो यस्य तस्याग्नेः द्युतिरिव द्युतिः कान्तिर्यस्य सः नृवरो नृषु श्रेष्ठो बुद्धः कर्ता । 'गतिः स्त्री मार्गदशयोः' इति मेदिनी । 'बर्हिः शुष्मा **कृष्णवर्त्मे**' त्यग्निपर्यायेष्वमरः । वपुष्मान् शरीरवान् रविः सूर्यः शारदं शरदि भवम् । 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ।' इत्यण् । अभ्रं मेघमिव सितं श्वेतवर्णमश्वं आरुरोह आरूढवान् । इत आरभ्य सर्गान्तं यावत्पुष्पिताग्रा वृत्तम् । 'अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा ।' इति लक्षणात् ।

( ८० ) अथेति । अथ बुद्धस्य आरोहणानन्तरं परिजनबोधकरं परिजनस्य सेवकजनस्य बोधस्य जागृतेः करं कर्तारं । निशीथचण्डं नीशीथेन अर्धरात्रेण चण्डः तीव्रः तम् । निशीथे हि सर्वेषामपि प्रसुप्ततया नगरादीनां स्तिमितत्वेन मन्दोऽपि शब्द आयतीभवन्निवालक्ष्यते तत उक्तं चण्डमिति । 'चण्डो दैत्यान्तरे तीव्रे' इति विश्वः। ध्वनिं परिहरन् त्यजन् । हेतौ शता । परिहारहेतोरित्यर्थः । सः सदश्वः शोभनो घोटकः कर्ता विगतहनुरवः विगतो हनुरवः हनुचलनजन्मा शब्दो यस्मात्तथाभूतः प्रशान्तहेषः प्रशान्ता प्रशमं प्राप्ता अत्यन्तं विनष्टेत्यर्थः हेषा ध्वनिर्यस्य तथाभूतः । 'अश्वानां हेषा ह्रेषा च निस्वनः ।' इत्यमरः । चकितविमुक्तपदक्रमः चकितं सभयं यथातथा विमुक्तः कृतः पदानां क्रमो विन्यासो येन तथाभूतश्च सन् । कदाचित्पदन्यासतो

कनकवलयभूषितप्रकोष्ठैः कमलनिभैः कमलानि च प्रविध्य ।
अवनततनवस्ततोऽस्य यक्षाश्चकितगतेर्दधिरे खुरान्कराग्रैः[1] ॥ ८१

गुरुपरिघकवाटसंवृता या न सुखमपि द्विरदैरपाव्रियन्ते ।
व्रजति नृपसुते गतस्वनास्ताः स्वयमभवन्विवृताः पुरप्रतोल्यः[2] ८२

पितरमभिमुखं सुतं च बालं जनमनुरक्तमनुत्तमां च लक्ष्मीम् ।
कृतमतिरपहाय निर्व्यपेक्षः पितृनगरात्स ततो विनिर्जगाम ॥८३॥

---

ध्वनिः संभवेत्तेन च परिजनः प्रबुध्येतेति सभयमेव पदन्यासं कुर्वन्सन्नित्यर्थः । जगाम गमनं कृतवान् क्रमु पादविक्षेप इत्यतो विनिष्पन्नस्य क्रमशब्दस्य पदविक्षेपार्थकत्वेपि पदशब्दस्य पृथक् प्रयुक्ततया विक्षेपमात्रार्थकता । विक्षेपश्च विन्यासः ।

( ८१ ) कनकेति । च किंच ततः बुद्धस्यारोहणानन्तरं अवनततनवः अवनता विनयेन नम्रीभूतास्तनवः शरीराणि येषां तथाभूता यक्षाः कर्तारः कनकवलयभूषितप्रकोष्ठैः कनकस्य सुवर्णस्य वलयैः कङ्कणैः भूषिता अलङ्कृताः प्रकोष्ठाः कूर्पराधोभागा येषां तथाभूतैः ' प्रकोष्ठः कूर्परादधः ' इति शाश्वतः । कमलनिभैः कमलानां सदृशैः कराग्रैः कराणामग्रभागैः कमलानि प्रविध्य विलूयेति यावत् । तेष्विति शेषः । चकितगतेः चकिता भयविशिष्टा भीतिसूचिकेत्यर्थः गतिर्गमनं यस्य तथाभूतस्य अस्य अश्वस्य करान् दधिरे धृतवन्तः । धाञो धारणार्थकाल्लिट् । पदध्वनिभिया साशङ्कं विचरतोऽश्वस्य खुरध्वनिविनिवारणार्थं करेषु विलूनानि कमलान्यादाय तस्य खुरान्धारयामासुरित्यर्थः । लवनस्य वेधक्रियासाम्यादुक्तं प्रविध्येति ।

( ८२ ) गुर्विति । गुरुपरिघकवाटसंवृता गुरुणा महता परिघेण अर्गलेन कवाटैश्च संवृताः संछन्नाः पिधाय प्रतिबद्धा इत्यर्थः । याः प्रतोल्यः द्विरदैः द्वौ प्रधानभूतौ रदौ येषां तैर्गजैः अपि सुखं अनायासं यथा स्यात्तथा न अपाव्रियन्ते नोद्घाट्यन्ते उद्घाटयितुं न शक्यन्त इत्यर्थः । ताः पुरप्रतोल्यः नगरस्य द्वाराणि ' दुर्गनगरद्वारेऽपि प्रतोली ' ति कल्पद्रुमधृतः साङ्गः । नृपसुते राज्ञः पुत्रे बुद्धे व्रजति गच्छति सति गतस्वनाः गतो नष्टः स्वनः शब्दो यासां तथाभूताः सत्यः स्वयं आत्मनैव विवृता उद्घाटिता अभवन् । ' स्वयमात्मना । ' इत्यमरः । एतेनास्य कार्यसिद्धेरवश्यम्भाविता द्योत्यते । 'अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् ।' इति ह्याहुः।

( ८३ ) पितरमिति । ततः प्रतोलीनां समुद्घाटनान्तरं कृतमतिः कृता संपादिता मतिर्ज्ञानं येन तथाभूतः । ज्ञानवानित्यर्थः । कृता संस्कृता मतिर्बुद्धिर्यस्येति वा । निर्व्यपेक्षः निर्गता व्यपेक्षा आशा यस्मात्तथाभूतः निरिच्छ इत्यर्थः । स बुद्धः कर्ता अभिमुखं आत्मनः संमुखं आत्मैकप्रवणमनसमित्यर्थः । पितरं, बालं बाल्ये वर्तमानं सुतं पुत्रं, अनुरक्तं अनुराग( प्रेम् )विशिष्टं जनं स्त्रीरूपं अनुत्तमां नास्त्युत्तमा

---

१ करान्खुराग्रैरिति व्यस्तं क्वापि । २ पुरः प्रतोल्यः ।

अथ स विकचपङ्कजायताक्षः पुरमवलोक्य ननाद सिंहनादम् ।
जननमरणयोरदृष्टपारो न पुनरहं कपिलाह्वयं प्रवेष्टा ॥ ८४ ॥
इति वचनमिदं निशम्य तस्य द्रविणपतेः परिषद्गणा ननन्दुः ।
प्रमुदितमनसश्च देवसंघा व्यवसितपारणमाशशंसिरेऽस्मै ॥ ८५ ॥
हुतवहवपुषो दिवौकसोऽन्ये व्यवसितमस्य सुदुष्करं विदित्वा ।
व्यदधत तुहिने पथि प्रकाशं घनविवरप्रसृता इवेन्दुपादाः ॥ ८६ ॥

---

यस्यास्तथाभूतां सर्वोत्कृष्टामित्यर्थः लक्ष्मीं संपदं अपहाय त्यक्त्वा पितृनगरात् पितुः पुरात् विनिर्जगाम निर्गतवान् । एतेनास्य वैराग्यद्रढिमा द्योत्यते ।

( ८४ ) अथेति । अथ निर्गमनानन्तरं विकचपङ्कजायताक्षः विकचे विकसिते पङ्कजे कमले इव अक्षिणी नेत्रे यस्य तथाभूतः । 'बहुव्रीहौ सक्थ्यक्ष्णो' रिति षच् । स बुद्धः पुरं अवलोक्य दृष्ट्वा सिंहनादं ननाद सिंहवत् नादं कृतवानित्यर्थः 'उपमाने कर्मणि च' ति कर्तरि णमुल् । 'कषादिषु यथा विध्यनुप्रयोग' इति नदेरनुप्रयोगश्च । सिंहवद्गर्जनुवाचेत्यर्थः । वचनमेवाह । **जननेति** । अहं जननमरणयोः जननस्य मरणस्य च अदृष्टपारः न दृष्टः साक्षात्कृतः पारः परतीरं परतीरभूत आत्मा येन तथा भूतः । असाक्षात्कृतपरमात्मेत्यर्थः । पुनः कपिलाह्वयं कपिलस्य आह्वयो नाम यस्य तत् कपिलवस्तुसंज्ञकं नगरमित्यर्थः । प्रवेष्टा न भविष्यामीति शेषः । प्रवेष्टेति कर्तरि तृच् । कपिलवस्तुनगरं न प्रवेक्ष्यामीत्यर्थः । इयं चोक्तिर्ललितविस्तरे प्रोक्ता यथा 'व्यवलोक्य चैव भवनं मतिमान् मधुरस्वरो गिरमुदीरितवान् । नाहं प्रवेक्षि ( प्रवेक्ष्यामि ) कपिलस्य पुरं अप्राप्य जातिमरणान्तकरम् । स्थानासनं शयनचङ्क्रमणं, न करिष्येऽहं कपिलवस्तुमुखम् । यावन्न लब्धं वरबोधि मया अजरामरं पदवरं ह्यमृतम् ॥' इति ( १५शेऽध्याये )

( ८५ ) इतीति । तस्य बुद्धस्य इति एवंप्रकारं वचनं भाषितं निशम्य श्रुत्वा द्रविणपतेः धनाधीशस्य कुबेरस्य परिषद्गणाः परिषदः सम्बन्धिनो गणा जनसमूहाः पारिषदा यक्षा इत्यर्थः । ननन्दुः आनन्दं प्रापुः । च किंच प्रमुदितमनसः प्रमुदितं आनन्दितं मनो येषां तथाभूता देवसंघा देवतानां समूहाः कर्तारः अस्मै बुद्धाय व्यवसितपारणं व्यवसितस्य निश्चितार्थस्य पारणं पारगमनं अभीष्टार्थप्राप्तिमित्यर्थः आशशंसिरे इच्छन्ति स्म । आङः शसि इच्छायामनुदात्तेत् । ततो लिट् । 'आशंसते स्यादिच्छाया' मिति दैवम् ।

( ८६ ) हुतवहेति । अन्ये पूर्वोक्तेभ्य इतरे हुतवहवपुषः हुतवहस्याग्नेः वपुः शरीरं येषां ते अग्निस्वरूपा इत्यर्थः । दिवौकसो देवाः कर्तारः अस्य बुद्धस्य व्यवसितं व्यवसायं सुदुष्करं सुतरां दुष्करं दुःखेन कर्तुं साधयितुं शक्यं विदि

---

१ प्रविष्टा । २ च दुष्करं । ३ अकुरुत ।

हरितुरगतुरङ्गवत्तुरङ्गः स तु विचरन्मनसीव चोद्यमानः।
अरुणकररुचायतेन्तरीक्षे[1] सह सुबहूनि जगाम योजनानि ॥ ८७॥

इति श्रीबुद्धचरिते महाकाव्येऽभिनिष्क्रमणो नाम
**पञ्चमः सर्गः**

---

मार्गस्य शीतलत्वान्निर्याणव्यवसायोऽस्य दुःसाध एवेत्यवगत्येति भावः। घनविवर-प्रसृता घनानां मेघानां विवरेभ्यः परस्परं संश्लिष्टानां मेघानां मध्यगतादन्तरादित्यर्थः प्रसृताः प्रसरं प्राप्ता इन्दुपादाश्चन्द्रस्य किरणा इव। प्रकाशकत्वमात्रेणेयमुपमा न तु शीतलप्रकाशविशिष्टतयेति द्रष्टव्यम्। तुहिने शीतले पथि मार्गे। तुहिनं शीतले त्रिषु इति कल्पद्रुमः। प्रकाशं औष्ण्यसंजननार्थं व्यदधत अकुर्वन्। विपूर्वाद्धाञो लङ्। अत्राकुरुतेति पाठः शिशुजनैरप्युपहसनीयः। एकवचनस्यात्रानुपयोगात्। बहुवचनस्य चाकुरुतेतिरूपानिष्पत्तेरिति। तुहिन इत्यर्श आदित्वादज्वा तुहिनं हिम-मस्त्यस्मिन्निति। पथः पुनर्हिमविशिष्टत्वं कल्पनैकशरणमेव।

( ८७ ) हरीति। तुकारश्चार्थः। किंच मनसि परेण अन्येन केनापि चोद्य-मानः प्रेर्यमाण इव विचरन् गच्छन् स तुरङ्गः अश्वः कण्ठकः कर्ता हरितुरगतुरङ्गवत् हरयो हरिद्वर्णास्तुरगा अश्वा यस्य स हरितुरगः सूर्यः तस्य तुरङ्गः अश्व इव। 'एको अश्वो वहति सप्तनामा।' इति श्रुते रवितुरगस्यैकत्वम्। 'वाच्यवत्पिङ्गहरितोः' इति हरिशब्दार्थेषु मेदिनी। आयते दीर्घे अन्तरीक्ष आकाशे अरुणकररुचा अरुणस्य सूर्यस्य कराणां किरणानां रुचा प्रभया सह सुबहूनि अतिशयेन बहूनि योजनानि जगाम गतवान्। 'हरिदश्वोष्णरश्मयः।' इति सूर्यपर्यायेष्वमरः। यथा सूर्यस्याश्वः सूर्यकिरणैः सममन्तरिक्षे बहूनि योजनानि प्रयात्येवं यक्षैः खुराणां धारितत्वादन्त-रिक्ष एव विचरन्नसावश्वो निशि चरन् यदा रविकरप्रकाशः प्रादुर्भूतस्तदा बहूनि योज-नानि गतवानासीदिति भावः। सहोक्तिरलङ्कारः। पाठान्तरं पुनरसमञ्जसमेव। इति शिवम्।

इति श्रीमत्पण्डितराजवंशावतंसवैयाकरणशेखरश्रीमत्कान्ताचार्यसूरिणां छात्रेण
श्रीमत्सदाशिवबुधेन्द्रसूनुना राशिवडेकरेण श्रीअप्पाशर्मविद्यावाचस्पति-
विद्यालङ्कारमहोपदेशकेन विनिर्मितायां बालबोधिन्याख्यायां
बुद्धचरितव्याख्यायां पञ्चमः सर्गः ॥

**॥ श्रीसदाशिवार्पणमस्तु ॥**

---

१ अरुणपरुषभारमन्तरीक्षं सरसबहूनि। अरुणपुरुषभावमित्यपिक्वचित्।

# अथ बुद्धचरितपद्यसूची।

# TRANSLATION
# OF
# BUDDHACHARITAM.

## CANTO 1.

1. Adoration to that peerless Arhat, who outdoes the creator in that he creates superb glory, excels the sun in that he expels the darkness of ignorance, surpasses the beautiful moon in that he dispels the heat of torment.

2. There was a city, redolent of (lit. tenanted by) the great seer KAPILA, whose precincts were encircled by the splendour of extensive and excellent tablelands (or forests सानु) as though by an array of clouds, whose mansions were lofty, and which dived into the sky.

3. By its very similarity (नय) in whiteness and loftiness (as white and lofty), it carried away the towering beauty of the mount *Kailasa*; Subsequently, it substantiated, methinks, that verisimilitude (or probability) while bearing the clouds, approaching it through an erroneous idea (or migration भ्रमात्)

4. In that city, illumined by the lustre of jewels, darkness like poverty did not find any room: the goddess of wealth and beauty shone as though beaming (or radiant) with a smile owing to her satisfaction for keeping company with citizens of supreme worth.

5. Creating loveliness in every mansion with its excellent (रत्नैः) door-terraces, or elevated seats at the door, decorated gateways, and corner-orifices, containing lion-figures (सिंहकर्णैः) that city caused emulation even towards one another of the edifices, as it had not found any equal in this world.

6. In that city, although approaching, the sun did not slight the moon-faces of the beauties, which had put to shade the day-lotuses. Afterwards he set out towards the western

ocean to plunge himself into the water, owing to the apparent touch of agony ( or agonising heat ).

7. ' This yonder Indra has been made the paragon by the people with respeet to the acquired glories of the Shakya King': with this thought the city strove with its banners, gaily fluttering streamers, to wipe out his stain as it were.

8. Although by night the city ridiculed the water-lilies ( or moon-lotuses ) through the lunar rays, fallen on its silver mansions, it still assumed the lustre of sun-lotuses by day, through the solar rays, piercing through the gold edifices.

9. Anointed as an emperor, King Shuddhodana of solar kingship adorned that lordly city as does the pericarp ( अभ्याशय ) a full-blown lotus.

10. Although the best भूभृत् [( a ) king, (b ) mountain ] yet he *was* सपक्ष [ ( a ) with allies, ( b ) with wings] although प्रवृत्तदान [ (a) habitually liberal (b) dropping rut ], still he was destitute of मद [ ( a ) arrogance, ( b ) ichor ]: though he was ईश [ (a) Lord, (b) God Shiva], still hs was समदृष्टि [ (a) equanimous, (b) having even number of eyes] at all-times: although his nature was साम्य [ (a) gentle, (b) lunar ], still he possessed ample प्रताप [ (a) heroic energy, (b) keen heat. ]

11. Being struck by his arm, and so falling down on the arenas of battlefields, the best elephants of ( or, in the form of) his enemies made devout obeisance to him with their heads with (the offering of) the emitted clusters of pearls as though with handfuls of flowers.

12. Having repudiated through his surpassing energy the enemies as does the hot-rayed sun the greater eclipses he greatly illumined the people all round, showing them the paths to be betaken to.

13. Through his policy duty, wealth, and pleasure did not assume another form respecting each other's domain; but they became the more sharpened with respect to their goal, seeming to emulate each other for mighty achievement.

14. Given precedence by ministers, great in संख्या [ (a) knowledge, (b) number ], and beyond संख्या [ (a) numberless,

(b) wanting in thought or knowledge], who did not put forth the wrong kind of ( or hostile ) brilliance ( scil. of intelligence), that Shakya king of lofty heart appeared to greater advantage, as does the moon with innumerable constellations which do not put forth counteracting effulgence.

15. He had माया for his queen to crown the galaxy of all other queens, who was strictly far away from Maya [(a) trickery, fraud; (b) proper name], whose surpassing beauty was enhanced or set off (lit. spread) by his surpassing handsomeness, and who repudiated the influence of *tamas* [ (a) folly, (b) darkness] like the splendour of the sun.

16. Exerting for welfare in the behalf of प्रजा [ (a) subjects, (b) progeny] like a mother, obedient towards the elders like a veritable Piety, and shining in the house of the supreme lord like the goddess of wealth and beauty, she came to be the pre-eminent goddess in this world.

17. Granted that the nature of women is dark, still that shone greatly when it betook itself to her ; for, the night does not become dark all round, when it has access to the white lunar digit.

18. Methinks (इव) , she (or, rather Boddhisattva of St.19) was the peculiar form visualised (or made visible) by Duty (or Law) after abandoning his subtile causal state, thinking (इति) it impossible for him in the transcendental condition to direct the deplorably hypocritical people towards himself.

19. Then falling from the body of a Tushita a semidivine being , and illuminating the three worlds, the excellent Buddha elect entered of his own accord into her womb as does the king of the Nagas into the Nanda-cave.

20. Having assumed an elephantine form, white as the Himalayas, with the six big tusks, and with his face, perfumed by rut, he ( i. e. the Buddha elect ) entered the side of the renowned queen of king Shuddhodana to annihilate the distracting calamities of the world.

21. To guard the sole master of the world, the guardians of the quarters approached from heaven : because, al-

though shining everywhere, the lunar rays attain distinction on the Kailasa mountain.

22. Bearing him in her womb as does the assemblage or row of clouds the flash of lightning, Maya on her part allayed the pangs of poverty of the people all round by showers of gifts.

23. Then once upon a time the queen with the inmates of the harem went with the king's permission to the garden Lumbinî, feeling excellent longings of pregnancy.

24. Out came the Buddha elect, breaking open the side of the queen, leaning on a bough, bent down with the weight of flowers.

25. The constellation Pushya (or the Kali Age) became propitious the very moment the son was born from the side of that queen, consecrated by a vow, for the good of the world without any travail (or labour) aud indisposition.

26. Springing from the side of his mother like the hot-rayed luminary from behind a cloud in the morn, he made the world yellow like gold with his flashing rays, dispelling the darkness.

27. Then the thousand-eyed god Indra, being pleased, slowly took him up who was yellow like a golden sacrificial post as soon as he was born, and on his head there fell from heaven two pure streams of water with showers of Mandara flowers.

28. Being borne by the chief gods and tinging them with the halo radiating from his body the Buddha elect surpassed in loveliness the newly risen moon, placed (or located) in a cluster of evening clouds.

29. Just as Aurva was produced from the thigh, Prithu from the hand, Indra's counterpart Mandhatri from the head, and Kakshivat from the curvy portion of the shoulder, so likewise was his birth.

30. Gradually issuing from the womb but not born in the usual way he appeared to have proceeded from the sky. As though with his self-consecrated in more than one *kalpa*, he was born wise and not a fool.

